□ डा० गणेशदत्त शर्मा

# वेदानामपौरुषेयत्वम्

दिव्यज्ञानस्वरूपा वेदाः "पौरुषेया अपौरुषेया वा" इति विषयमवलम्ब्य वेदविद्याविशारदैर्वैदिक-समालोचकैश्च विविधप्रबन्धेषु विद्वद्गोष्ठीषु च बहुवारं स्वकीया विचारततिः प्रस्तुता। नास्तिकाः, पाश्चात्यास्तन्मतानुसारिणश्च विद्वांसो वेदान् पौरुषेयान् मन्यन्ते। किन्तु वेदानामन्तःसाक्ष्येण षड्दर्शनाचार्यविवेचनेन ईश्वरीयज्ञाननिकषोपलपरीक्षणेन च वेदानामपौरुषेयत्वमेव सिद्ध्यति।

**वेदानामन्तः साक्ष्यम्:**—वेदमन्त्रेषु सुस्पष्टं वर्णितं यद् वेदा ईश्वरादेव प्रादुर्भूताः। तद्यथा—ऋग्वेदे:—

**"तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे।[1]**
**छन्दांसि जज्ञिसरे तस्माद्यजुस्तस्मादजायत॥**

इत्थमेवाथर्वे—यस्मादृचो अपाक्षतन् यजुर्यस्मादपाकशन्।

**सामानि यस्य लोमानि अथर्वाङ्गिरसो मुखम्।**
**स्कम्नं तं ब्रूहि कतमः स्विदेव सः॥[2]**

अन्यस्मिन्नथर्वमन्त्रे कथितं यदीश्वरः ऋग्भ्योऽजायत ताश्च ऋचः ईश्वराज्जनिमलभन्तः—

**"स वा ऋग्भ्योऽजायत तस्माद् ऋचोऽजायन्त"।[3]**

परमेश्वरो मन्त्रेषु "वाचस्पतिः"—वृहस्पतिः"—इत्यादिविशेषणैर्विभूषितः। स एव वृहस्पतिर्वस्तुतो वेदावाण्या पतिः स्वामीति वा। सा दैवी वागीशकृपया ऋषीणामन्तः करणेषु प्रादुर्भवति। ऋषयश्च तां स्वात्मान्तःकरणन्निःसार्य तया वस्तूनां नामादीन्युच्चारयन्तीनि ज्ञानप्राप्तिपरम्परा सम्यक् प्रस्तुता ऋङ्मन्त्रैः—

**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः।[4]**
**यदेषां श्रेष्ठं यदरि प्रमासीत् प्रेणा तदेषां निहितं गुहा विः॥**

ऋग्वेदे बहुशो विशेषतया स्तुताया वेदवाण्या ऋषीणामभ्यन्तरे प्रवेशोऽग्रिमायां ऋचि—इत्थं चित्रितः—

**"यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्"[5]**

अन्यस्यां ऋचि तु सुस्पष्टमेव व्याहृतम्—

**"यथेमां वाचं कल्याणीमावदानि जनेभ्यः"[6]**

एभिस्सन्दर्भैः सिद्धान्तोऽयं निष्पन्नतां याति यत् परमकारुणिकः सच्चिदानन्दस्वरूपो वागीशः परमेश्वर एव जगद्धिताय सर्वभूतहितसाधिकाममृतमयीं वेदवाणीं नवनवोन्मेषशालिनिप्रतिभावतां तपः—पूतमानसानां ऋषीणां हृदयेषु प्रकाशयति ऋषयश्च तामन्यानुपदिशन्ति सर्वत्र च प्रचारयन्ति।

यथा—ईश्वरो नित्यः परिपूर्णश्च तथैव—ईश्वरीयवाग्भूता वेदा अपि नित्याः परिपूर्णाश्च। वेदवाचो नित्यत्वं—"वाचा विरूपनित्यया"[7] इत्यादिरूपेण मन्त्रे प्रतिपादितम्।

वेदोत्तरसाहित्येऽपि वेदानामपौरुषेयत्वमनादित्वं नित्यत्वं च समर्थितम्। तैत्तिरीयब्राह्मणे वेदवाण्याः अविनाशित्वमित्थं वर्णितम्—

**वागक्षरं प्रथमजा ऋतस्य ।**[8]
**वेदानां माताऽमृतस्य नाभिः ।।**

श्वेताश्वतरोपनिषदि कथितं यत्सर्गादौ परमेश्वरो ब्रह्माणमुत्पादयति तत्कृते च वेदानुपदिशति—

**"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"**[9]

बृहदारण्यकानुसारं चत्वारो वेदाः ईश्वरस्य निःश्वासभूताः—

**"एवं वा महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः"**[10]

वेदभाष्यकारः सायणाचार्योऽप्यमुमेव विचारमनुमोदयामास—

**यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।**
**निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।**[11]

महाभारते वेदानामनाद्यनन्तत्वं, नित्यत्वं, ईश्वरीयत्वं, सर्वप्रवृत्तिप्रकाशकत्वं च प्रतिपादितम्—

**अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।**[12]
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।।**

कुल्लूकभट्टमते प्रलयकालेऽपि वेदराशिः सूक्ष्मरूपेण परमात्मनि स्थितो भवति । मेधातिथिनापि—"नैव वेदाः प्रलीयन्ते महाप्रलयेऽपि"—इत्युक्त्वा वेदानां नित्यत्वं निष्पादितम् । श्रीमद्भगवद्गीतायां—"कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्" इति वाक्येन वेदानामीश्वरोद्भवत्वं संस्थापितम् । सायणाचार्येण "नमः ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः"—इत्यादितैत्तिरीयारण्यकवाक्ये भाष्यं कुर्वता लिखितम्—"यद्यप्यपौरुषेये वेदे कर्तारो न सन्ति तथापि कल्पादावीश्वरानुग्रहेण मन्त्राणां लब्धारो मन्त्रकृत उच्यन्ते" ।।[14] एवमेवैतरेयब्राह्मणे—"सर्वर्षिर्मन्त्रकृत्[15]"—इति वाक्यस्य टीकायां "कृ"—धातुं दर्शनार्थे स्वीकुर्वन् सायणः "मन्त्रकृत्"—इति पदस्य "मन्त्रद्रष्टा"—इत्यर्थं जग्राह । यास्काचार्यस्तु—मन्त्रद्रष्टृत्वेनैव ऋषीणां ऋषित्वं स्वीचकार ।[16] इत्थं वेदमन्त्रैः वेदोत्तरकालिकभारतीयग्रन्थसन्दर्भैश्च वेदानामनादिता, नित्यता, अपौरुषेयता च प्रमाणिता भवति ।

**वेदानामपौरुषेयत्वे दार्शनिकमतानि**:—षड्दर्शनसूत्रकारैस्तद्भाष्यकृद्भिश्च युक्तिप्रमाणोपन्यासपुरःसरं वेदानां प्रामाण्यं अपौरुषेयत्वं च साधितम् । न्यायदर्शने—"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"[17]—इति गौतमसूत्रे आप्तप्रामाण्यादेव वेदानां प्रामाण्यमङ्गीकृतम् । अत्र यथाभूतस्यार्थस्योपदेष्टा, नित्यः, सर्वज्ञः, परमकारुणिकः परमेश्वर एव आप्तः,—सृष्ट्यादौ तदन्याप्तस्याभावसद्भावात् । अतस्तद्वक्तृत्वेनैव तदुपदेशवाक्यभूता वेदा अपि ईश्वरीयज्ञानस्वरूपा एव । वात्स्यायनमते अतीतानागतेषु युगान्तरेषु वैदिकसम्प्रदायाविच्छेद एव वेदनित्यत्वसाधकः ।[18] महाप्रलयेऽप्येषा वेदपरम्परा नैव विच्छिन्नतां याति । सर्गादौ परमेश्वरः वेदान् प्रणीय स्वयमेव सम्प्रदायं प्रवर्तयति । इत्थं न्यायनये वेदा अपौरुषेयाः खलु ।

वैशेषिकमतेऽपि वेदा ईश्वरोक्ताः । मुनिना कणादेन सूत्रे कथितम्—"तद्वचनाद् आम्नायस्य प्रामाण्यम्" ।[19] अस्य व्याख्याने उदयनाचार्यस्तत्पदेन ईश्वरं जग्राह—"तद्वचनात् तेन ईश्वरेण प्रणयनात्" ।[20] अनेनायमेव सिद्धान्तः सिद्धिमायाति यद्धर्मप्रतिपादकस्य वेदस्यादिवक्ता परमेश्वरस्तत्प्रामाण्यादेव च वेदप्रामाण्यम् ।

सांख्यसिद्धान्ते वेदा न पौरुषेयाः । अस्ति सांख्यसूत्रे तेषां पौरुषेयत्वनिषेधः—"न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्" ।[21]

वस्तुतः पुरुषे वेद कर्तृत्वस्य संभावनापि न शक्यते कर्तुम् । यतो ह्यल्पज्ञः पुरुषः सर्वज्ञकल्पं सर्व-

विद्यास्थानं वेदं रचयितुं सर्वथा—असमर्थः। कपिलमुनिना—"न मुक्तामुक्तयोरयोग्यत्वात्"[३२] इतिसूत्रे मुक्तामुक्तयोरुभयविधयोरपि पुरुषयोर्वेदरचनायामयोग्यता प्रदर्शिता। पूर्वस्य वीतरागत्वादपरस्य चाज्ञानान्धतमोग्रस्तत्वात्। सांख्यदर्शने वेदानां प्रामाण्यं प्रमाणान्तरं नापेक्षते। यतो हि वेदेषु यथार्थज्ञानोद्भवस्य स्वाभाविकी दिव्यशक्तिर्वरीवर्ति। कपिलेन—"निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्[३३]"—इति व्याहरता श्रुतीनां प्रामाण्यं सुष्ठु प्रमाणितम्। दार्शनिकप्रवरो वाचस्पतिमिश्रोऽपि सांख्यतत्त्वकौमुद्यां वेदानां स्वतस्त्वमपौरुषेयत्वं चाङ्गीचकार[३४]।

योगसूत्रकारेण तत्रभवता भगवता पतंजलिना—"स पूर्वेषामपि गुरुः कालेनानवच्छेदात्[३५]"—इति सूत्रे वेदोपदेशस्यानादित्वमपौरुषेयत्व चोपपादितम्। नित्यः सर्वज्ञश्च परमेश्वरः पूर्वेषां ब्रह्मादीनामृषीणां गुरुणां वा गुरुः वेदोपदेष्टा अस्ति। स एवात्मनः सर्वशक्तिमत्तया कालानवच्छिन्नः सन् अनादिकालात्प्रवर्तमानेष्वतीता नागत सर्गेषु आद्यर्षीणामात्मनि वेदज्ञानमभिव्यनक्ति। ऋषयश्च तमपौरुषेयं वेदोपदेशं परम्परया प्रसारयन्ति।

वेदान्तिनोऽप्यपौरुषेयवादिनः। महर्षिणा व्यासेन—"शास्त्रयोनित्वात्[३६]"—इति ब्रह्मसूत्रे विद्योतितं यद्—ऋग्वेदादिशास्त्राणां योनिः कारणं ब्रह्म एव। अस्मिन् सूत्रे भाष्यं कुर्वता शंकराचार्येणापि वेदापौरुषेयत्वं प्रमाणीकृतम्[३७]। वस्तुतः सर्वज्ञानमयस्य वेदस्योद्भवः सर्वज्ञादन्यतो न संभवः। वेदा अनायासमेव लीलान्यायेन पुरुषनिःश्वासवद् तस्मात्परब्रह्मणः संभवन्ति। अपौरुषेयत्वादेव वेदानां नित्यत्वमङ्गीकृतं वेदान्तसूत्रकारेण—"अत एव च नित्यत्वम्"[३८]। अस्य भाष्ये शंकराचार्यः कल्पादौ परमेश्वराद् वेदप्रादुर्भावं प्रतिपादयामास[३९]। बादरायणमते—प्रतिकल्पं वेदानां नामरूपयोः समानरूपत्वात् तेषां नित्यत्वे न कश्चिद्विरोधः—"समानरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च[४०]"। वेदान्तपरिभाषायां कथितम्—"पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चारण विषयत्वम्" तथा च सर्गाद्यकाले परमेश्वरः—पूर्वसर्गसिद्धवेदानुपूर्वी समानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदमिति[४१]। एवं पूर्वसर्गानुरूपत्वात् शाश्वतक्रमवत्त्वाद् सर्वार्थद्योतकत्वाच्च नूनं वेदानामपौरुषेयत्वमेवाभिमत वेदान्तविद्भिः।

मीमांसकानां वेदविषयिका मीमांसाऽतीव विस्तृता प्रशस्ता च। मीमांसादर्शनाचार्यैः विविधविघतर्कोपन्यासपूर्वकं शब्दस्य नित्यत्वं संस्थापितम्[४२]। अतो नित्यशब्दराशिभूतानां वेदानां नित्यत्वं स्वाभाविकमेव। मीमांसकमते वेदानां कर्ता नैव कश्चिपुरुषः। मीमांसादर्शनस्य प्रथमाध्याये पञ्चमसूत्रे भाष्यं कुर्वता शबरस्वामि भणितम्—

**"न कृत्वा संबन्धं व्यवहारार्थं केनचित् वेदाः प्रणीताः"।[४३]**

मीमांसकानुसारं वेदः स्वयमाविर्भूतः स्वप्रकाशज्ञानराशिः। अपौरुषेयत्वादेव वेदे नास्ति काचिद्दोषसंभावना। यथा चोक्तं कुमारिलभट्टेन श्लोकवार्तिके—

**"यद् वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः"**

स्वयंप्रकाशत्वादेव वेदानां स्वतःप्रामाण्यमपि स्वभावसिद्धम्।

वैदिकसंहितासु वशिष्ठविश्वामित्रादीनां नामानि दृष्ट्वा वेदानामपौरुषेयत्वे नित्यत्वे च संदिहानानां समाधानं जैमिनिमुनिनाः—आख्या प्रवचनात्"[४४]—इतिसूत्रेण विहितम्। अर्थात् वैदिकसूक्तेषु ऋषीणामाख्यानं प्रवचनादेवास्ति न ग्रन्थकर्तृत्वात्। यतो हि तैरेव प्रथमं मन्त्राणां प्रवचनं कृतम्। एवमेव—'बबरः प्रावाहणिरकामयत[४५]"—इत्यादिसंहितावाक्येषु—"बबरः प्रावाहणि"—नाम नैव कश्चित्पुरुषः। अत्र वस्तुतः "बबरः प्रावाहणिः" सामान्यतो यौगिकशब्दत्वेन—"परं तु श्रुतिसामान्यमात्रम्[४६]" इति जैमिनीसूत्रानुसारं प्रवहणस्वभावशीलस्य बबरध्वनियुक्तस्य च वायोर्वाचकः।

मीमांसकानां मते वेदमन्त्रा एव वेदानां नित्यत्वप्रतिष्ठापकाः। पूर्वोद्धृते—"वाचा विरुपनित्यया" इति ऋग्वेदवाक्ये—"**नित्या वाक्**" इतिपदं वेदमन्त्राणामेव कृते प्रयुक्तम्। जैमिनिना स्वमतसिद्धये–अयमेव चरमों हेतुः स्वीकृतः। निष्कर्षतो वेदा नित्या अपौरुषेयाः स्वतःप्रमाणभूताश्चेति मीमांसकमतम्।

**व्यवहारनिकषोपले वेदापौरुषेयत्वपरीक्षणम्ः—**वेदशास्त्रप्रमाणैर्वेदापौरुषेयत्वं संस्थाप्य साम्प्रतं व्यवहारदृष्ट्यापि तेषामपौरुषेयत्वपरीक्षणमावश्यकीयम्। तदेव ज्ञानमपौरुषेयमीश्वरीयं वा यत्र शाश्वत-धर्मस्य विश्वजनीनसंस्कृतेश्चोपदेशः स्मात्। अस्ति च वेदेषु विश्वबन्धुत्वस्य सहास्तित्वस्य विश्वशान्तेश्चो-पदेशः। "सा प्रथमा संस्कृतिर्विश्ववारा"—"इति ऋङ्मन्त्रानुसारं वैदिकी संस्कृतिरेव सर्वप्रथमा विश्व-जनीना च संस्कृतिरस्ति। अपरं च—अपौरुषेयमीश्वरीयज्ञानं जातिनिरपेक्षं वर्गनिरपेक्षं च सत् मानव-मात्रस्य कृते भवति। वेदेष्वेतदपि वैशिष्ट्यं वरीवर्ति। यथा च स्वयमेवोद्घोषयति वेदोपदेष्टा वागीश्वरः परमेश्वरः—

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**
**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च॥**[२७]

अत्र वेदवाण्या सार्वभौमिकता प्रत्यक्षसिद्धा खलु। किमधिकम् ईश्वरीयज्ञानायापेक्षितं—शाश्वत-सत्यप्रतिपादकत्वं, सर्वभूतहितसाधकत्वं, सृष्टिनियमानुकूलत्वं, ज्ञानविज्ञानोद्भासकत्वं, सर्वविद्यासंयुक्त-त्वं, सर्वथा निर्भ्रान्तित्वमित्यादिकं सकलमपि वेदानामङ्गभूतम्। इत्थमीश्वरीयज्ञानस्य सर्वाण्यपि लक्षणानि वेदेषु चरितार्थतां यान्ति।

अन्ततो वेदापौरुषेयत्वमतं वेदान्तःसाक्ष्यसिद्धं शास्त्रप्रमाणपरीक्षितं व्यवहारनिकषनिरीक्षितं चेति दिक्।

---

**संकेत सन्दर्भ**


१. ऋक् १०/९०/९ तथा यजु० ३१/७।
२. अथर्व १०/७/२०।
३. अथर्व १३/४/३८।
४. ऋक् १०/१७/१।
५. ऋक् १०/७१/३।
६. यजु २६/२।
७. ऋक् ८/७५/६।
८. तै० ब्रा० २/८/५।
९. श्वे० उ० ६/८।
१०. बृ० उ० २/४/१०।
११. सायणभाष्यमंगलाचरणम्।
१२. म० भा० १२/२३/२४।
१३. भगवद्गीता ३/१५।
१४. तै० आ० ४/१७ सायणभाष्यम्।
१५. ऐ० ब्रा० ६/१/१
१६. "ऋषिर्दर्शनात्। स्तोमान्ददर्शेत्यौ पमन्यवस्तद् यदेनांस्तपस्यमानान् ब्रह्म स्वयमभ्यानर्षत्, ऋषयोऽभवं-स्तदृषीणां ऋषित्वमिति विज्ञायते"—निरुक्त–२/३/२।
१७. न्यायसूत्रम् २/१/६८।
१८. मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेद इति वेदानां नित्यत्वं आप्तप्रामा-ण्याच्च प्रामाण्यम्॥ उपर्युक्तन्यायसूत्रे वात्स्यायनभाष्यम्।
१९. वैशेषिक सूत्रम् १/१/३।
२०. उदयनाचार्यः—किरणावलिः (वै० सू० १/१/३ व्याख्या)
२१. सांख्यसूत्रम् ५/४६।
२२. सांख्यसूत्रम् ५/४७।
२३. सांख्यसूत्रम् ५/५१

२४. श्रुतिः—वाक्यजनितं वाक्यार्थज्ञानम् । तच्च स्वतः प्रमाणम् । औरुपेयवेदवाक्यजनितत्वेन सकल-दोषाशंकाविनिर्मुक्तेर्युक्तं भवति । सां० तत्त्व० कौ० ५ वीं कारिका ।

२५. योगसूत्रम् १.२६ ।

२६. ब्रह्मसूत्रम् १/१/२ ।

२७. उपर्युक्त सूत्रे शांकरभाष्यम् ।

२८. ब्रह्मसूत्रम् १/३/२९ ।

२९. उपर्युक्तसूत्रे शांकरभाष्यम् ।

३०. ब्रह्मसूत्रम् १/३/३०

३१. वेदान्तपरिभाषा (आगमपरिच्छेदस्यान्तिमो भागः) ।

३२. मीमांसासूत्रम् १/१/१४, १७, १८, १९ ।

३३. मीमांसासूत्रम् १/५ (शाबरभाष्यम्) ।

३४. मीमांसासूत्रम् १/१/३० ।

३५. तै० सं ७/२/२/१ ।

३६. मीमांसासूत्रम् १/१/३१ ।

३७. यजु० २६/२ ।

---

अध्यक्ष, संस्कृत विभाग

**एन. ए. एस. कालिज, मेरठ ।**

☐ धर्मदेवो वेदवाचस्पतिः

# यास्क कालिका विविधा वेदार्थपद्धतयः

वेदोऽखिलो धर्ममूलमिति नातिरञ्जितं वचो भगवतो मनोः। वेदा हि भारतीयसभ्यतायाः संस्कृतेः धर्मस्य ज्ञानविज्ञानस्य च मूलभूतं स्रोतः। प्राचीनतमत्वात् ज्ञानविज्ञानानां गहनत्वाच्च भारतीया ऋषयो मुनयश्च एतेषामवगाहनाय सुरक्षणाय च विविधानुपायाँश्चक्रुः, वेदाङ्गनाम्ना विख्यातान् विविधान् ग्रन्थाँश्च निर्ममिरे। तेषु प्रधानतममंगं निरुक्तशास्त्रं वर्तते। तत्रादौ निरुक्तशास्त्रस्य यानि प्रयोजनान्युक्तानि तेनाप्यस्य वेदाङ्गस्य महत्त्वं विशदी भवति। तानि प्रयोजनानि प्राधान्येन त्रीणि सन्ति—

(१) मन्त्रेष्वर्थप्रत्ययः, (२) पदविभागः, (३) मन्त्राणां दैवतज्ञानं च ॥

(निरुक्त, अ० १, पाद ५–६)

श्री यास्काचार्यविरचित-निरुक्तशास्त्राध्ययनेन प्रतीयते यत्ततोऽपि प्राक्तनात् कालात् निरुक्तविद्या विविधा वेदार्थपद्धतयश्च प्रचलिता आसन्। श्रीयास्कमुनिना स्वग्रन्थे चतुर्दशनिरुक्ताचार्याणां नामानि निर्दिष्टानि, स्थाने स्थाने च निर्वचनप्रसङ्गे ब्राह्मणवचनान्युद्धृतानि, तथैव मन्त्रार्थप्रसङ्गे विविधानां सम्प्रदायानामुल्लेख आलोचनं वा कृतमिति। ते च प्राधान्येन पञ्च सन्ति—याज्ञिकाः, आख्यानविदः, ऐतिहासिकाः, अध्यात्मवादिनः, नैरुक्ताश्च। तद्व्यतिरिक्तं कुत्रचित् नैदानमतं वैयाकरणमतमपि प्रदर्शितम्। परं न तयो र्मन्त्रार्थविषये सविशेषं स्थानम्। पूर्वोक्ता पञ्च सम्प्रदायाः प्राचीनात् कालादद्यावध्यपि अस्माकं देशे प्रचलिताः सन्ति।

किं नाम स्वरूपमेतेषां सम्प्रदायानां, कस्मिन् विषये चैतेषां संवादो विसंवादो वा यास्कमुनेरित्येव विचारणीयोऽस्माकम्।

(१) **याज्ञिकसम्प्रदायः**—एष सम्प्रदायो विविधेषु प्रसङ्गेषु निर्दिष्टो दृश्यते। दर्शपौर्णमासादि यज्ञेषु विनियोगायैव मन्त्राः सृष्टा इति सिद्धान्तमाश्रित्यैव मन्त्राणामर्थं देवतानां वा स्वरूपं स्थिरी कुर्वन्ति एते याज्ञिकाः।

**'ऋचां त्वा पोषमास्ते पुपुष्वान्'** इत्यादिषु मन्त्रेषु अधियज्ञमर्थं स्वीकुर्वाणोऽपि यास्काचार्यो विनियोगार्थं मन्त्राः सृष्टा इति सिद्धान्तं नांगीकरोति। अत एव यज्ञविधिमनुसृत्य देवतार्थनिर्णयपद्धतिं नानुमोदते।

(२) **आख्यानसम्प्रदायः**—मन्त्रार्थव्याख्याप्रसङ्गे पञ्चषः वारं अस्य सम्प्रदायस्योल्लेखो विहितो यास्काचार्येण। मन्ये ऋक्षु स्थाने स्थाने आख्यान शैलीं विलोक्य अस्य सम्प्रदायस्य प्रादुर्भावो बभूव। यथाह किल—**'यो जात एव प्रथमो बभूव'**—(ऋक् २/१२/१), **'एकः सुपर्णः स समुद्रमाविवेश'**—(ऋक् १०/११४/४) इत्येतयोः मन्त्रयो = व्याख्या प्रसङ्गे यास्को मुनिराह—**''ऋषेः दृष्टार्थस्य प्रीतिर्भवत्याख्यान संयुक्ताः।''** वस्तुतः नैषा वास्तविकी कथा, परं वस्तुवर्णनस्य शैलीविशेष एव। बहवो महात्मानः, बौद्धानां जातकादयो ग्रन्थाः, बाइबलप्रभृतयश्चेमां शैलीमाद्रियमाणा दृश्यन्ते। परं कालक्रमेण आख्यानवादिन एतान्याख्यानि घटनापराणि स्वीकर्तुं प्रवृत्ताः।

एष आख्यानवादश्च कालक्रमेण ऐतिहासिकसम्प्रदायं जन्म प्रादात्। ब्राह्मणग्रन्थानामर्थवादशैली उभयो मंध्यवर्तिनी शृंखला वर्तते। तत्र इन्द्रवृत्रादीनां अधिदैवतमर्थं कुर्वताऽपि ब्राह्मणकारेण वृत्रशब्दस्य निर्वचनसमये भूतकालवाचिनी क्रिया प्रयुक्ता। तद्यथा—"**यदवृणोत् तद् वृत्रस्य वृत्रत्वम्, यदवर्तत तद्वृत्रस्य वृत्रत्वम्, यदवर्धत तद् वृत्रस्य वृत्रत्वम्।।**"

इमं भूतकालक्रियायाः प्रयोगं समीक्ष्य ऐतिहासिकाः खलु इमां भूतकालिकां वास्तविकीं घटनामम-न्यन्त। 'इति ह–निश्चयेन-आस–बभूव'—इत्येवं मन्यमाना विद्वांसः 'ऐतिहासिका' इति संज्ञामलभन्त। नैरुक्तस्तु एतान्याख्यानानि वस्तु प्रतिपादनस्य शैली विशेष एव मन्यते, न पुनः परमार्थेन घटिता घटना-विशेषाः।

(३) **ऐतिहासिकसम्प्रदायः**—श्रीमता यास्काचार्येण सर्वतो बहुलमस्यैव सम्प्रदायस्योल्लेखा व्यधायि। मन्ये तस्मिन् युगेऽस्यैव बहुतरः प्रचार आसीत्। निरुक्ते त्रिविधोऽस्योल्लेखः। (क) स्थानत्रये—'**इति नैरुक्ताः, इत्यैतिहासिकाः**' इत्युक्त्वा उभयोः सम्प्रदाययो र्मतमुद्धृतम्। (ख) पञ्चसु स्थलेषु—'**तत्रेतिहास-माचक्षते**' इत्युक्त्वा ऐतिहासिकं मतं सङ्क्षिप्योक्तम्। (ग) कुत्रचिच्च '**ऐतिहासिकाः**' '**इतिहासः**'—इत्येतयोः शब्दयोः प्रयोगमविधाय काचित् कथा वर्णिता। अन्ते च 'तदभिवादिन्येषा ऋग्भवति'–इत्येवमैतिहासिकं मतं प्रदर्शितम्।

प्रथमे प्रकारे तदितरयोः प्रकारयोश्च भेदद्वयमुपलक्ष्यते। (१) यत्र 'ऐतिहासिकाः' इत्युक्तं तत्र तद्विरोधी नैरुक्तपक्षोऽपि निर्दिष्टः। अथ च एतादृशेषु प्रसङ्गेषु प्रायेण देवतानामर्थविशेष एव विचार्यते। यत्र पुनः 'इतिहासमाचक्षते' इत्युक्तं, केवलं कथा वा वर्ण्यते, तत्र निरुक्तपक्षः पृथक् न प्रदर्श्यते, न च कस्याश्चिद् देवताया विचारः। परं कश्चिद् ऋषिः राजा वा प्रस्तूयते।

एतेन एतत्तु निश्चप्रचं वक्तुं शक्यते यत् वृत्र–सरण्यू–सरमा–प्रभृतीनां देवासुराणां इतिहासपरा व्याख्या नानुमोदिता श्रीमतो यास्काचार्यस्य। स किल तेषामधिदैवतमर्थमंगीकुरुते। तेषां देवानां संग्रामं जनकपुत्रादिसम्बन्धं वा औपचारिकम् आलङ्कारिकं वा मन्यते। परं तदतिरिक्ते प्रसङ्गद्वये नैरुक्तानामभि-मतस्यार्थस्य निर्देशाभावादस्ति किल सन्देहावकाशो विदुषां यद् यास्काचार्यो वेदे ऋषीणां राज्ञां वैतिहासिकं वर्णनमूरीकरोति न वेति। अस्मिन् प्रसङ्गे वयं पश्यामः, यदा स मुनिः—'**पुरुषविद्यानित्यत्वात् कर्मसम्पत्ति मन्त्रो वेदे।**' (नि० १/२), '**तद्यदेनान् तपस्यमानान् ब्रह्म स्वयम्भू अभ्यानर्षत् ते ऋषयोऽभवन्, तदृषीणा-मृषित्वम्।**' (नि० २/११), '**एवमुच्चावचैरभिप्रायैः ऋषीणां मन्त्रदृष्टयो भवन्ति।**' (नि० ७/३)—इत्येवं प्रभृतिषु स्थलेषु वेदानां नित्यत्वं ऋषीणां च मन्त्रद्रष्टृत्वमभ्युपगच्छन्नवलोक्यते, तदा यास्कमते देवापि शन्तनु-प्रियमेध-सुदास-विश्वामित्र-त्रितप्रभृतय ऐतिहासिकाः पुरुषाः सन्ति इति न विश्वसिति नश्चेतः। अथ च इदमपि चिन्तनीयं भवति यदन्यथा कुतः खलु यास्काचार्य एषां व्यक्तिविशेषबोधकानां नाम्नां निर्वचनं विधत्ते। यतो हि स खलु जातिवाचकानां संज्ञापदानां (Common Noun) एव सर्वत्र निर्वचनमकरोत्, न पुनः व्यक्तिवाचकानां शाकपूणिस्थौलष्ठीविप्रभृतीनां व्यक्तिवाचकानां पदानाम्। तस्मादिदमनुमातुं शक्यते यन्निरुच्यमानत्वादेतानि नामानि न व्यक्तिविशेषवाचकानि, परं तदन्तर्निहितं गुणं क्रियां वा प्रकाशयितुः यस्य कस्यापि राज्ञो वा ऋषे र्वा बोधकानि सन्ति। मन्ये नेदं यास्कमुनेरभिमतं यत् पुरा कदाचिद् देवापिः शन्तनुः मुद्गलो वा नाम कश्चिद्राजविशेषोऽजायत, प्रत्युत निर्वचननिर्दिष्टैः गुणैरलंकृताः समये समये-ऽस्मिन् संसारे जायमाना राजान एव वर्ण्यन्ते। अतएव निरुक्तसमुच्चयग्रन्थप्रणेता वररुचिः स्कन्दस्वामी

चाहतुः—"**औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः नित्यत्व विरोधात्, परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः।**"—इत्युक्त्वा स्कन्दस्वामी किल ऋषिषेण-देवापि-शन्तनु-प्रियमेध-भृग्वंगिरिस्त्रित-प्रभृतीनि पदानि नित्यपक्षे यजमानवाचकानि नित्यपदार्थवाचकानि च व्याख्यातवान् (पृष्ठम् ७७, ७८, १८०, २१०)। एतदेव क्वचिद् दुर्गाचार्योऽप्यंगीकरोति। '**विश्वकर्मा विमनाः**……' इति मन्त्रे '**तत्रेतिहासमाचक्षते**'—इत्युक्त्वा श्री यास्कः यदा स्वग्रन्थे कमपीतिहासं ददृशितवान्। तस्याभिप्रायं विद्वद्वरेण्यो भाष्यकारो दुर्गाचार्य इत्थं व्याचष्टे—

'तत्रैतस्मिन्नर्थे इतिहासमाचक्षते आत्मविद् इतिवृत्त परकृत्यर्थवादरूपेण। यः कश्चिदाध्यात्मिक आधिदैविक आधिभौतिको वाऽर्थ आख्यायते दिष्ट्युदितावभासनार्थं स इतिहास इत्युच्यते। स पुनरयमितिहासः सर्वप्रकारो नित्यमविवक्षितस्वार्थः तदर्थप्रतिपत्तॄणामुपदेशपरत्वात्।'

इदमपि सम्बोभवीति यद् यास्केन मुनिनैतेषु स्थलेषु इतिहासशब्दप्रयोग इतिवृत्तपरमकृत्वा अर्थान्तर एव कृतो भवेत्। इतिहासशब्दः इतिवृत्तसूचकः सन्नपि प्राचीनसंस्कृतसाहित्येऽनेकेष्वर्थेषु प्रयुज्यते स्म। श्रीमान् मोनियरविलियम्स महोदयः Sanskrit English Dictionary नामग्रन्थे इतिहासपदस्य अधोलिखितानर्थान् दर्शयति—

Talk, legend, tradition, history, traditional, account of formed events, heroic history.

यथा महाभारतेऽनेकत्र 'तत्रोदाहरन्ति हेममितिहासं पुरातनम् इत्युक्त्वा पशुपक्षिणां कथा वर्णिता। अत्र किलेतिहासशब्दः काल्पनिककथामात्रपरो न तु इतिवृत्तसूचकः।

समासत इदमेवास्माभिः वक्तुमिष्यते यत् पुरस्तात् प्रोक्तेषु द्वितीयतृतीयविधेषु प्रसंगेषु ऐतिहासिकमर्थमखण्डयन्नपि यास्काचार्यः तन्निर्वचनव्याजेन तेषां पदानां जातिवाचकत्वं दर्शयति, यद्वा पुरुषविशेषस्येतिहासमनुक्त्वा नित्येतिहासं सूचयति।

इदमपि नाप्रासंगिकं भवेद् यदैतिहासिकसम्प्रदायवादिनो यथा वेदेषु राज्ञामृषीणाञ्चेतिहासं जानन्ति तथैवते इन्द्रादीनां देवतानामपीतिहासं स्वीकुर्वन्ति। इन्द्रदेवस्य सोमपानं, स्वगृहे निवासः, वृत्रेण सह संग्रामः इत्यादीनि पुरुषविधवर्णनानि तदितिहाससूचकान्येव। तथैव इन्द्रादीनां पितृ-पुत्र-भगिनी-जारादयः सम्बन्धा अपि सन्ति। पुरुषविधा एवैते देवाः। इत्थमयमैतिहासिकसम्प्रदायः ग्रीक-रोमन देवानामिव वैदिकदेवानामितिहासपरां व्याख्यां (Mythological or historical interpretation) करोति।

(४) **अध्यात्मवादिसम्प्रदायः**—अस्य सम्प्रदायस्योल्लेखः सर्वतः प्रथमं '**य ईञ्चकार न सो अस्य वेद**' इति मन्त्रव्याख्यायां परिप्राज्ञकेति नाम्ना विहितः। तथैव '**चत्वारि वाक् परिमिता पदानि**……' इति मन्त्रव्याख्यावसरे विविधसम्प्रदायेषु अस्य सम्प्रदायस्यापि नामोल्लेखो वर्तते। स्वयं यास्काचार्योऽपि केषाञ्चिन्मन्त्राणामाधिदैवतमर्थं विधायाध्यात्मपरमर्थमपि प्रस्तुतवान्। (तद्यथा—**यत्र सुपर्णाः**०। नि० ३/१२, **सप्त ऋषयः**। नि० १२/३७, **विश्वकर्मा**०। नि० १०/२६, **तिर्यग्बिलः**। नि० १२/३८)। निरुक्तस्य चतुर्दशाध्याये तु प्रायेण सर्वे मन्त्रा अध्यात्मपरा एव। यदि नामायमध्यायो यास्ककृतो नापि स्वीक्रियेत तथाप्येभिः प्रसंगैः नातितिरोहितं यद् यास्काचार्यो मन्त्राणां न केवलमाधिदैवतमेवार्थं स्वीकुरुते, परमध्यात्मपरमपि। अत्रेदमप्यवधेयं यद् अध्यात्मशब्देनात्र ब्रह्मपरोऽर्थो नाभिप्रेतः, परं केन-तैत्तरीय-बृहदारण्यकादिष्विवात्रापि अध्यात्मशब्देन शरीरमुच्यते।

(५) **नैरुक्तसम्प्रदायः**—श्रीयास्काचार्योऽस्य सम्प्रदायस्य प्रमुखः प्रवक्ता वर्तते, न तु प्रवर्तकः। अतिचिरन्तनोऽयं सम्प्रदाय.। यास्केन मुनिना स्वग्रन्थे स्वयं चतुर्दशानांमाचार्याणां नामग्राहपूर्वकं स्थाने-स्थाने मतमुद्धृतम्। बहुत्र च 'इति नैरुक्ताः' इत्युक्त्वाऽस्य सम्प्रदायान्तरेभ्यो मतभेदो दर्शितः। द्विविधं खलु वैशिष्ठ्यमस्य सम्प्रदायस्य। प्रथमं तावत् सर्वाणि नामान्याख्यातजानि इति सिद्धान्तः। अतएव निर्वचनप्रकारमुल्लिख्योपसंजहम्—**"अविद्यमाने सामान्येऽक्षरवर्णसामान्यान्निर्ब्रूयात्। न त्वेव न निर्ब्रूयात्। न संस्कारमाद्रियेत॥"** द्वितीयं च वैशिष्ठ्यं देवतावादविषयकं, वैदिकदेवतानामाधिदैवतपरं व्याख्यानम् (Naturatistic interpretion)। एतदुभयं सम्प्रदायान्तरेभ्यो नैरुक्तसम्प्रदायस्य वैशिष्ठ्यं बोधयति। कतिचिद्भिरुदाहरणैः तत् स्फुटीभवति।

याज्ञिका ऐतिहासिकाश्च तावत् प्रायेण लौकिकशब्दानिव वैदिकानपि शब्दान् रूढीन् योगरूढीन् वा मन्यन्ते, न पुनः सर्वथा यौगिकान्। तेषां पदानाञ्च वाच्यार्थमेव गृह्णन्ति प्रायेण। अतएव इन्द्रादीनां देवानां पुरुषविधं वर्णनं युद्धादींश्च विलोक्य ग्रीकरोमपौराणिकदेवानिव वैदिकदेवानपि लोकोत्तरशक्तिमतः मनुष्यानिव शुभाशुभकर्मकर्तॄंश्च मन्यन्ते। नैरुक्तास्तावत् अन्यथैव विचारयन्ति। नैरुक्तसमये तु—**"स न मन्येतागन्तूनिवार्थान् देवतानाम्"** तन्मते त्रयो वावलोकाः, तिस्र एव च तेषां देवताः प्रधानाः। **'अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः, आदित्यो वा द्युस्थानः: तासां महाभाग्याद् एकैकस्या अपि बहूनि नामधेयानि भवन्ति, अपि वा कर्मपृथक्त्वात्। यथा होताऽध्वर्युर्ब्रह्मोद्गाता इत्येकस्य सतः।**

(नि॰ ७/५॥)

इत्थमेताः सर्वा देवता प्राकृतिकाः सूर्यादयः भौतिका पदार्था एव, न पुनः काश्चिदद्भुताकृतयो अलौकिकाः सत्त्वविशेषाः। केषुचिन्मन्त्रेषु निर्वचनबलेन लक्ष्यार्थं वाऽऽश्रित्यासां देवतानां अध्यात्मपरोऽर्थोऽपि विहितः। नैरुक्तसम्मतस्य देवताव्याख्यानस्यांगीकारेण अनेकेषां मन्त्राणांमुपहासास्पदत्वं, देवानाञ्चाश्लीलतादोषः समाधीयते। तथा चैतान्याख्यानानि औपम्यमेव दर्शयन्ति, न तु वास्तविकं युद्धादिकम्। इन्द्र-वृत्रासुरयुद्धवर्णनमित्थं विशदीकृतं यास्काचार्येण—

**"तत् को वृत्रः? मेध इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः। अपाञ्च ज्योतिषश्च मिश्रीभाव-कर्मणो वर्षकर्म जायत, तत्रोपमार्थेन युद्धवर्णा भवन्ति।** (नि॰ २/१६॥) तथैव स **'स्वसुजरिः शृणोतु नः'** (ऋक् ६/५५/५।) इति मन्त्रे स आदित्य एव स्वसुः–स्वभगिन्याः उषसः जारो जरयिता उक्तः। अपरञ्च—**'पिता दुहितुर्गर्भमाधात्।** (ऋक् १/१६४/३३।) इति मन्त्रेऽपि पितृ-दुहितृशब्दौ न रूढ़ी, परं यौगिकौ। 'पितापातापालयिता वा भवति। (नि॰ ४/१॥') दुहिता दूरे हिता दोग्धे र्वा। (नि॰ ३/४॥) पालपितृत्वात् पर्जन्योऽत्र पिता प्रोक्तः, दूरस्थितत्वाच्च भूमिः दुहिता। नैरुक्तमते नात्र पुरुषविधस्य देवविशेषस्य स्वकन्यायां गर्भधारणमुक्तम्, प्रत्युत पर्जन्यस्य पृथिव्यां वृष्टिजलसेचनमेव वर्णितम्। यद्वा पर्जन्ये पितृत्वस्य भूम्याञ्च दुहितृत्वस्य व्यपदेश उपचारादेव मन्तव्यः, काव्ये तथात्वात्।

अपरञ्च यास्काचार्योऽधोलिखितामृचमपि नैरुक्तदिशा व्याख्यातवान्—

**"अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदर्दुर्विवस्वते।**
**उताश्विनावभरद् यत्तदासीदजहादुद्वामिथुना सरण्यूः॥** (ऋक् १०/१/८७)

तत्रेतिहासमाचक्षते। त्वाष्ट्री सरण्यूः आदित्याद् यमौ मिथुनौ जनयाञ्चकार। सा सवर्णामन्यां प्रतिनिधायाश्वरूपं कृत्वा प्रदुद्राव। स विवस्वानादित्य आश्वमेव रूपं विधाय तामनुसृत्य संबभूव। ततो अश्विनौ जज्ञाते। सवर्णायां मनुः।

सैषा कथा सामाजिकं जीवनं क्षुद्रतरं दर्शयति, बालानां वा मनोविनोदायालम्। यास्कस्तु नात्रेतिहासं मन्यते। तन्मते प्रकृतौ नित्यं विलोक्यमाना घटनैवात्र वर्णिता। अस्तंगमिष्यन् सायंकालिकः सूर्य एव

त्वष्ट्रा। तस्मिन् काले पृथिव्यां तस्य प्रभाऽपि लुप्यते। ततो जायमाना छाया रात्रि र्वाऽत्र त्वाष्ट्री सरण्यूरुक्ता।

**उत्तदासं कौलितरं बृहतः पर्वतादधि।**
**अवाहन्निन्द्र शम्बरम्॥** (ऋक् ४/३०/१४)

इत्यादिषु मन्त्रेषु शम्बरवृत्रादयो नासुरविशेषाः यानिन्द्रो जघान, परं मेघ एव तैः शब्दैः रुच्यते, इन्द्रश्चात्र विद्युद्वाचकः। तयो र्मिश्रीभावकर्मणो यद् वर्षकर्म भवति तदेव युद्धरूपेण वर्ण्यते। तस्मादिदं युद्धवर्णनमालङ्कारिकमेव न तु वास्तविकम्। तथैवैतेषां देवानां हस्तपादादीनामुल्लेखोऽप्यौपचारिक एव, न तु वास्तविकः। एतादृशं पुरुषवर्णनं तु पाषाणादीनां जड़पदार्थानामपि श्रूयते। तद्यथा—"अभिक्रन्दन्ति हरितेभिरासभिः" तथा "होतुश्चित् पूर्वे हविरधमाशत" इति ग्रावस्तुतौ, "सुखं रथं युयुजे सिन्धुरश्विनम्" इति च नदीस्तुतौ।

एवमेव मन्त्रेषु देवतानां ये स्वसृदुहितृपितृजारादयः सम्बन्धा वर्णिता तेऽपि न रूढ़िवाचकाः, प्रत्युत यौगिके लाक्षणिके वाऽर्थे प्रयुक्ताः। पितृशब्दो न केवलं देहोत्पादयितुः जनकस्य नाम, परं यः कश्चित् पालनकर्ता, स पिता उच्यते। जारशब्दो न केवलमुपपतिवाचकः, परं कस्यापि जरयितु र्भवति। दुहितृ-शब्दो न कन्यावाचक एव, परं 'दूरेहिता' इत्यर्थसामान्यं द्योतयति। नापि स्वसृशब्दः केवलं भगिनीवरः परं वेदे 'स्वंसरः'—सूर्यो भवति 'स्वसृ' च उषाः।

इत्येवमेषां यौगिकमर्थं विधाय—'उदीरय पितरा जार आभगम्।' इत्येवमादिषु ऐतिहासिकै र्योऽश्लीलोऽर्थो वर्ण्यते, तन्नैरुक्तपद्धत्या निराक्रियते। यतोहि—'आदित्योऽत्र जार उच्यते, रात्रे र्जरयिता, स एव भासाम्॥" तस्याः कालः सूर्यास्तमयादारभ्य उषस उदयात् प्राग् वर्तते। अयं च मध्यवर्ती कालः अश्विनाविति संज्ञां लभते। इमौ अश्विनावेव सरण्यूपुत्रौ वर्तेते।

एवं निरुक्तसम्प्रदाये उर्वशी पुरूरवा वा नैतिहासिकौ स्त्रीपुरुषौ, परं विद्युन्मेघावेव।

समासत इदमुच्यते यन्निरुक्तसम्प्रदायः प्राधान्येन वेदमन्त्राणां तद्देवतानां च आधिदैवतव्याख्यां विधत्ते, याज्ञिकसम्प्रदायश्चाधियज्ञमाधिभौतिकं वाऽर्थं करोति, अध्यात्मवादिनश्च तेषामाध्यात्मिकीं व्याख्यां विदधति। श्रीयास्काचार्यश्च तेषां मन्त्राणां प्राधान्येनाधिदैवतव्याख्यां विदधन्नपि इतरं व्याख्याद्वयं न तिरस्करोति। अपि तु स्वयमपि कुत्रचित्तथैव व्याख्यां कुरुते। परं तृतीये ऐतिहासिके सम्प्रदाये नास्ति तस्य काश्चिदादरः। तन्मते ऋक्षु वर्णितस्यालङ्कारिकवर्णनस्य यौगिकस्यार्थस्य चाज्ञानादेव ऐतिहासिक-सम्प्रदायस्य जन्माभूत्॥

———

भूतपूर्व—वेदोपाध्याय
**गुरुकुल काङ्गड़ी विश्वविद्यालय**
**हरिद्वार,**

□ डा० राकेश शास्त्री

# वैदिक निपातों का महत्त्व

निरुक्तकार आचार्य यास्क ने पदों का चार श्रेणियों में विभाजन किया है—नाम, आख्यात, उपसर्ग और निपात।[1] यद्यपि कुछ विद्वानों ने 'कर्मप्रवचनीय' को पञ्चम पद-वर्ग की संज्ञा दी है,[2] तथापि सर्वमान्य न होने से वह वर्ग असंदिग्ध नहीं है। वस्तुतः निपात का भाषा में महत्वपूर्ण स्थान है। प्रायः सभी आचार्यों ने पदों की गणना करते समय निपातों की गणना चतुर्थ वर्ग में की है,[3] किन्तु इससे निपातों के महत्त्व में किसी प्रकार की कमी नहीं आती है। कुछ भाषा वैज्ञानिकों के विचार में तो भाषा की उत्पत्ति एवं विकास का अधार ही निपात रहे हैं उनके अनुसार—'अति प्राचीन काल में जब मानव के पास परिष्कृत वाणी का अभाव रहा होगा, तो वह मूल धातुओं एवं निपात जैसे सूक्ष्म पदों के द्वारा ही अपने भावों का व्यक्तीकरण करता रहा होगा।[4]

भाषा के विकास में निपातों की इस महत्त्वपूर्ण स्थिति को ध्यान में रखते हुए जब हम वैदिक साहित्य का अध्ययन करते हैं तो वहाँ पर हम देखते हैं कि निपात प्रायः विविध-अर्थाभिव्यक्ति के लिए प्रयुक्त हुए हैं। एक ही निपात विविध स्थलों पर प्रायः एकाधिक अर्थों में प्रयुक्त हुआ है। सम्भवतः निपातों के इस अर्थ-वैविध्य को दृष्टि में रखते हुए ही प्राचीन आचार्यों ने—"विविध अर्थों में प्रयुक्त या निपतित होने के कारण ही इन्हें 'निपात' संज्ञा दी।"[5]

निपातों की इस परिभाषा से आचार्य यास्क,[6] निरुक्त के टीकाकार आचार्य दुर्ग,[7] ऋक्प्रातिशाख्य-कार,[8] माधवभट्ट,[9] एवं वृहद्देवताकार[10] आदि आचार्यों की सहमति अभिव्यक्त होती है। किन्तु विस्मय का विषय है कि जहाँ एक ओर आचार्यों द्वारा निपात जैसे भाषा के महत्त्वपूर्ण विभाग को विविधार्था-भिव्यक्ति का श्रेय प्रदान किया गया वहीं दूसरी ओर कुछ आचार्यों द्वारा 'निपातः पदपूरणः' कह कर इसकी उपेक्षा करदी गयी।[11] निपातों के विषय में विद्वानों का यह मत-वैविध्य ही वास्तविक स्थिति जानने के लिए चिन्तन एवं अन्वेषण के द्वार उद्घाटित करता है।

प्रस्तुत संक्षिप्त लेख में इसी विषय पर विचार करते हुए निपातों की मात्र पदपूरण कहकर उपेक्षा करना उचित नहीं है अपितु प्रयुक्त स्थल पर उसके प्रयोग की सार्थकता के चिन्तन की आवश्यकता है। साथ ही वैदिक साहित्य में निपातों का अध्ययन भी वैदिक मन्त्रों एवं स्थलों के गूढार्थ को जानने में सहायक होगा, अतः इनके अध्ययन की आवश्यकता पर प्रकाश डालने का प्रयास किया है।

माधवभट्ट ने ऋग्वेदानुक्रमणी में 'न, वै, किल, नाम, खलु, इत्, आत्, अद्य सीम्, उ, कम्, उत, नूनम्, इव, इङ्, स्म, चित्, घ और च निपातों को अनर्थक माना है।[12] इन निपातों में से प्रायः सभी निपातों के, वैदिक साहित्य की बात तो दूर है—ऋग्वेद में ही सार्थक प्रयोग मिलते हैं। अतः माधवभट्ट ने किस आधार पर इन निपातों को अनर्थक प्रतिपादित किया है? यह निश्चित रूप से नहीं कहा जा सकता।

विचार करने पर निपातों को अनर्थक कहने का कारण सम्भवतः यह प्रतीत होता है कि कतिपय निपात वेदों में कतिपय स्थलों पर स्पष्ट रूप से किसी विशिष्ट एवं निश्चित अर्थ को प्रकट करते हुए प्रतीत नहीं होते। किन्तु यदि उन स्थलों का सूक्ष्म दृष्टि से अध्ययन किया जाए तो वे ही निपातपूर्ण तथा सार्थक प्रतीत होते हैं। इस कथ्य की पुष्टि माधवभट्ट के कथन से भी होती है क्योंकि वे स्फुट अर्थ वाले निपातों को सार्थक एवं सूक्ष्म अर्थ होने पर पदपूरण मानते हैं।[13]

वैदिक साहित्य, मुख्यतया वेदों में निपातों का विशिष्ट महत्त्व है । ऋग्वेद विश्वसाहित्य का आदि ग्रन्थ है एवं भाषा तथा भावों की दृष्टि से अत्यन्त समृद्ध है, इस तथ्य को देश-विदेश के प्रायः सभी विद्वान् स्वीकार करते हैं । पुनरपि उसी ऋग्वेद के मन्त्रों में प्रयुक्त निपातों को केवल पदपूरण कहकर उनकी उपेक्षा करना युक्तियुक्त प्रतीत नहीं होता, क्योंकि ऐसी स्थिति में जबकि मन्त्रों के पदों का व्यतिक्रम भी स्वीकार न किया जा सके, एक ही मन्त्र में प्रयुक्त चार अथवा पाँच निपात अनर्थक हों यह बात युक्तियुक्त प्रतीत नहीं होती ।

ऋषि मन्त्रों के द्रष्टा थे उन्हें ईश्वरीय ज्ञान का दर्शन हुआ ऐसी स्थिति में तथा ऋग्वेद की सुसमृद्ध भाषा-शैली एवं उच्च भावयुक्त कल्पना को देखकर यह मानना तर्कसंगत प्रतीत नहीं होता कि वैदिक ऋषियों के अथवा ईश्वर के पास सार्थक पदों का अभाव था, इसलिए उन्होंने छन्दपूर्ति के लिए विभिन्न स्थलों पर अनर्थक निपातों का प्रयोग किया ।

वस्तुतः वेद मन्त्रों की व्याख्या का क्षेत्र विशाल है । वैदिक पदों की व्याख्या अनेक प्रकार से उपलब्ध होती हैं । विभिन्न व्याख्याकार एक ही पद की विविध प्रकार से व्याख्या करते हैं । एक भाष्यकार एक स्थल पर किसी निपात की व्याख्या में उसको अनर्थक अथवा पदपूरणार्थक स्वीकार करता है तो वहीं भाष्यकार उसी को सार्थक एवं वैकल्पिक अर्थों में प्रयुक्त मानता है ।[१४] ऐसी स्थिति में निपातों को अनर्थक या पदपूरण मानना अथवा उनका पदपूरण लक्षण करना समीचीन प्रतीत नहीं होता, अपितु यह कथन वस्तुस्थिति को जानने के लिए प्रेरित करता है ।

'निपात सार्थक हैं' इस कथन की पुष्टि में एक अन्य प्रमाण यह भी दिया जा सकता है कि प्राचीन आचार्यों ने अर्थवान् अक्षर समूह को पद की संज्ञा दी है ।[१५] तथा निपात को एक पद विभाग के रूप में अधिकांश विद्वान् स्वीकार करते हैं ।[१६] अतः निपातों की सार्थकता ही सिद्ध होती है । यदि निपात को हम अनर्थक मानते हैं तो उसे चार प्रकार के पद समूह से पृथक् करना होगा, जो कि प्राचीन आचार्यों को स्वीकार्य नहीं है । अतः निपातों को अनर्थक या पदपूरण कहना युक्तिसगत प्रतीत नहीं होता ।

वैदिक एवं लौकिक संस्कृत साहित्य में निपातों का बहुल प्रयोग हुआ है । लौकिक संस्कृत में प्रयुक्त निपातों को तो फिर भी प्रायः निश्चित अर्थों में प्रयुक्त कहा जा सकता है । किन्तु वैदिक साहित्य में स्थिति भिन्न है । वहाँ किसी निपात विशेष के अर्थ के निर्धारण में ऋग्वेद क भाष्यकार भी एक मत नहीं हैं । भाष्यकारों का यह मत-वैषम्य भी निपातों के अर्थ विवेचन की आवश्यकता को ही प्रदर्शित करता है ।

निपातों के विषय में भाष्यकारों की यह मतभेद की स्थिति मात्र ऋग्वेद में ही नहीं है, अपितु अन्य वेदों में भी रही है । साथ ही प्रातिशाख्य ग्रन्थों द्वारा निपातों को अनर्थक पादपूरण प्रतिपादित करना [१७] एवं निरुक्तकार द्वारा कुछ निपातों को अनेक अर्थों वाला मानना, [१८] वस्तु स्थिति की वास्तविकता को जानने के लिए प्रेरित करता है ।

इसके अतिरिक्त आचार्य यास्क ने निरुक्त में निपातों पर विचार करते हुए अन्त में उनके सूक्ष्म एवं सर्वांगीण अध्ययन की आवश्यकता पर बल दिया है ।[१९] माधवभट्ट ने भी यद्यपि ऋग्वेदानुक्रमणी में निपातों पर अपेक्षाकृत विस्तार से विचार किया है, क्योंकि वहाँ उन्होंने 'निपातानुक्रमणी' प्रकरण के छः अध्यायों में निपातों की चर्चा की है, जिनमें निपातों के विविध अर्थ उनका सार्थक एवं अनर्थक प्रयोग संख्या तथा अनेकार्थकता आदि विषयों का विवेचन किया है तथापि उन्होंने भी निपातों से सम्बद्ध अनेक

प्रश्नों पर निर्देशात्मक संकेत मात्र देकर उनके समुचित निरीक्षण एवं परीक्षण की आवश्यकता बतायी है।[२०] उनके मत में निपातों के प्रयोग को जानने में कुशल व्यक्ति निपातों के विविध अर्थों की कभी उपेक्षा नहीं करते।[२१]

यह विस्मय का विषय है कि भाषा का महत्त्वपूर्ण अङ्ग एवं वैदिक साहित्य में विशिष्ट महत्त्व होते हुए भी निपातों के साथ सायण प्रभृति भाष्यकारों ने भी पूर्ण न्याय नहीं किया है क्योंकि अनेक स्थलों पर निपातों का अर्थ करते समय अरुचि दिखलाते हुए उन्होंने या तो उस निपात का कोई अर्थ ही नहीं किया।[२२] अथवा इसे पद पूरण मान लिया।[२३] आचार्य मुद्गल ने प्रायः सायण का ही अनुकरण किया है। अनेक स्थलों पर उनका भाष्य सायण भाष्य से अक्षरक्षः मिलता है। वेंकटमाधव ने अधिकांश स्थलों पर निपात का कोई अर्थ नहीं किया है या फिर मात्र मूल निपात की ही आवृत्ति कर दी है। स्कन्द स्वामी तो अधिकांश निपातों को पदपूरण ही मानते हैं।[२४] किन्तु स्वामी दयानन्द निपातों के अर्थ के विषय में सचेष्ट प्रतीत होते हैं क्योंकि उन्होंने प्रायः सर्वत्र निपातों का कोई न कोई अर्थ किया है।

उक्त विवेचन से स्पष्ट है कि अब तक उपलब्ध प्राचीन आचार्यों की निपात-चर्चा केवल दिग्दर्शन मात्र ही है, उससे निपात विचार की आवश्यकता ही सिद्ध होती है। अतः वैदिक अध्ययन एवं वेद मन्त्रों के अर्थौचित्य की दृष्टि से विविध निपातों के विविध अर्थों के विषय में सूक्ष्म विवेचन एवं सर्वांगीण अध्ययन की महती आवश्यकता है।

---

**सन्दर्भ संकेत**

१. चत्वारि पद जातानि नामाख्याते चोपसर्गनिपाताश्च—निरुक्त १/१/८

२. तत्र पदमनेकप्रकारनामाख्यातोपसर्ग निपात कर्मप्रवचनीय भेदात्—व्यक्ति विवेक पृ० २७।

३. ऋ० प्राति १२/१७, वा० प्राति १/१, महाभाष्य—१/१/१, कौटिल्य अर्थ० २/१०/२८।

४. आवेग सिद्धान्त—भाषाविज्ञान—डा० कर्णसिंह, १९७४–पृ० ३६।

५. अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति—निरुक्त १/४।

६. वही।

७. उच्चावचेष्वर्थेषु निपतन्ति, इति निपाताः निरुक्त दुर्गटीका—१/४।

८. निपातानामर्थवशान्निपातनात्—ऋक् प्रातिशाख्य—१२/१५।

९. उच्चावचेषु निपततामर्थेषु यथायथम्—ऋग्वेदानुक्रमणी ३/१/१७।

१०. उच्चावचेषु चार्थेषु निपाताः समुदाहृताः।
वशात् प्रकरणस्यैते निपात्यन्ते पदे-पदे ॥ बृहद्देवता—२/१९३।

११. (क) निपातः पादपूरण —ऋक् प्रातिशाख्य—१२/८/७०७।
(ख) निपातस्तु अर्थविशेषाभावात् पादपूरणः—वा० प्रा० अनन्त भाष्य ८/५०।
(ग) अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति।
पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति। निरुक्त १/९/३

१२. न-वै-किल-नु-नामाथ खल्विदादधसीमु कम्।
उत् नूनमिवेङ्घस्मचिद्धचाः स्युरनर्थकाः ॥ ऋग्वेदानुक्रमणी ३/१/१४।

१३. स्फुटत्वोद्ग्रहणादिश्च क्वचित् सूक्ष्मः क्वचित् स्फुटः।
यत्र स्फुटास्तदा सार्थाः सूक्ष्मे स्युः पूरणा इति ॥ ऋग्वेदानुक्रमणी ३/१/१८।

१४. घ इत्यनर्थः प्रसिद्धचर्थो वा—ऋग्वेद सायणभाष्य १/१६१।८।
ह शब्दः पूरणः प्रसिद्धौ वा। वही ४/४१/२

१५. अर्थः पदमेन्द्राणामिति—निरुक्त दुर्गवृत्ति १/१/८
अर्थः पदमाहुरेन्द्राः—सुषेण विद्याभूषण, कलापचन्द्र, सन्धि २०।
अर्थाभिधायि पदम्, पद्यते गम्यते ज्ञायतेऽर्थोऽनेनेति पदम्। वाजसनेयी प्रातिशाख्य—उव्वट भाष्य ३/२
१६. (क) चत्वारि पदजातानि नामाख्याते चोपसर्ग निपाताश्च निरुक्त १/१/८।
(ख) नामाख्यातमुपसर्गो निपातः, चत्वार्याहुः पदजातानि। ऋक्प्राति० १२/१७।
(ग) अक्षर समुदायः पदं तच्चतुर्धा। नामाख्यातोपसर्ग निपाताः। वा० प्राति० १/१।
(घ) चत्वारि पदजातानि नामाख्यातोपसर्ग निपाताश्च। महा० भा० १/१/१।
१७ वाज० प्राति० अनन्तभाष्य ८/५०, ऋ० प्राति० १२/८/७०७, ऋग्वेदानुक्रमणी ३/१/१४, निरुक्त १/६/८।
१८. चिदित्येषोऽनेक कर्मा,…नु इत्येषोऽनेककर्मा। निरुक्त १/४/११, १५।
१९. एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः। निरुक्त १/३/११।
२०. उच्चावचेषु निपततामर्थेष्वेषु यथायथम्।
हानोपादान वान्विप्रो न मन्त्रार्थेषु मुह्यति॥ ऋग्वेदानुक्रमणी ३/१/२७।
२१. निपातानां प्रयोगस्य स्थानं ज्ञात्वा न मुहयति।
अतो लोकानुसारेण निपातार्थं प्रदर्शयेत्॥ वही ३/३/२१
२२. ऋ० १/१०/१०, ४२/२, १३५/४, २/६/४, ३/२/६, (हिनिपात)
२३. उ इति पादपूरणः ऋ० १/५०/१, सायण भाष्य
हेति पूरणः ऋ० ५/४१/७ सायणभाष्य।
२४. उ सु पदपूरणौ ऋ० स्कन्दस्वामी भाष्य १/३६/१३।
उ इत्येतत् पदपूरणः ऋ० स्कन्दस्वामी भाष्य १/११६/१७

———

प्रवक्ता, संस्कृत विभाग
**गुरुकुल काङ्गड़ी विश्वविद्यालय, हरिद्वा**

□ डॉ० श्रीनिवास शास्त्री

# इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्

महाभारतस्येदं वचनम् ।[1] इदं च वायुपुराणे (१.२०१), पद्मपुराणे (सृष्टि० २.५१) चापि दृश्यते, अन्येषु च परवर्तिषु ग्रन्थेषु । क्वचिच्च वेदार्थमुपबृंहयेत् इत्यपि पाठः । उपबृंहणशब्दस्यार्थो विशदीकरणम् । यथाऽऽह रामानुजः उपबृंहणञ्च श्रुतिप्रतिपन्नार्थविशदीकरणम् ।[2] अन्यत्र च स विस्तरेण शब्दमिमं स्पष्टयति—उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानां वाक्यैः स्वावगतवेदवाक्यार्थविशदीकरणम् ।[3] स हि उपबृंहणस्य अवश्यकर्तव्यतामपि समर्थयति । इतिहासपुराणाभ्यां किमर्थमुपबृंहणं कार्यम् ? कथं वा कार्यम् ? इत्ययं विषयो नात्र समालोचनीयः, अपितु महाभारतस्यास्मिन् वाक्ये पुराणशब्दस्य कोऽर्थो युक्तिप्रमाणसह इत्येव विमृश्यते ।

सत्यमेवैतद् यत्पुराणशब्दोऽयं लोके विद्वत्समाजे च श्रीमद्भागवतादीनां वाचकत्वेन प्रसिद्धः, श्लोकमिममुद्धृत्य सायणाचार्येण च निरूपितम्—“उपनिषदुक्ताः सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः”,[4] तेनेदं प्रतिभाति यदत्र महाभारतवचने पुराणशब्देन ब्रह्मवैवर्त्तादीनि पुराणानि सायणाचार्यस्याभिमतानि; अन्येषामपि चानेकेषां व्याख्याकाराणां तथैवाभिमतम् । तथापि—यदा श्रीमद्भागवतादीनां नामापि नासीत् तादृशे सुदूरप्राचीनेऽपि काले पुराणशब्दस्य प्रयोग उपलभ्यते, सायणप्रभृतयश्चाचार्याः क्वचित् पुराणशब्दस्यान्यमप्यर्थं बोधयन्ति, समीक्षकैश्च महाभारतग्रन्थः श्रीमद्भागवतादिभ्यः प्राचीन इति निर्णीतम्, अतो विचारमर्हत्येवायं विषयः ।

पुराणशब्दस्य प्रयोगोऽतिप्राचीनः । मन्त्रेषु ब्राह्मणेषु चाप्ययं शब्दो बहुश उपलभ्यते । ऋग्वेदस्य केषुचित् स्थलेषु तु स्पष्टमेतद् यत् पुरातनशब्दसमानार्थक एव पुराणशब्दः ।[5] सायणाचार्यप्रभृतिभिश्च वेदभाष्यकारैरपि तत्र चिरन्तनशब्दस्य पुरातनशब्दस्यैवार्थे पुराणशब्दो व्याख्यातः ।[6] स तु नात्र विचारस्य विषयः । परं सन्ति मन्त्रेषु ब्राह्मणेषु च केचन सन्दर्भा यत्रास्य शब्दस्य पुरातनार्थे प्रयोगो न वक्तुं शक्यते तत्र तु विचारणीयं यदयं शब्दः कस्यार्थस्य बोधकः, इति । तद्यथा, अथर्ववेदे श्रूयते—

**स बृहतीं दिशमनुव्यचलत् ।।**
**तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ।।**
**इतिहासस्य च वै पुराणस्य च गाथानां च नाराशंसीनां च प्रियं**
**धाम भवति य एवं वेद ।।**[7]

एषां मन्त्राणां किञ्चित् प्राचीनं भाष्यं नोपलभ्यते । सायणभाष्यमपि च नोपलब्धम् । स्वामिदयानन्देन मन्त्रोऽयं पूर्वपक्षे समुद्धृतः, न च व्याख्यातः । पूर्वपक्षं समादधता चेदमुक्तम्—“एतैः प्रमाणैर्ब्राह्मणग्रन्थानामेव ग्रहणं जायते न श्रीमद्भागवतादीनामिति । कुतः ? ब्राह्मणग्रन्थेष्वितिहासादीनामन्तर्भावात् ।”[8] अत्र च पुराणशब्दस्य कोऽभिप्रायः ? इत्यस्मिन् प्रसङ्गे ज्ञाप्यते—“सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् (छान्दोग्य० प्रपा० ६), आत्मा वा इदमेकमेवाग्र आसीन्नान्यत् किञ्चन मिषत् (ऐतरेयोपनिषद् १.१), आपो ह वा इदमग्रे सलिलमेवास (शत० ११.१), इदं वा अग्रे नैव किञ्चिदासीत्···इत्यादीनि जगतः पूर्वावस्थाकथनपूर्वकाणि वचनानि ब्राह्मणान्तर्गतान्येव पुराणानि ग्राह्याणि” ।[9]

अथर्ववेदेऽन्यत्रापि पुराणशब्द उपलभ्यते । तद्यथा–‘ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह’ । तत्र च सायणाचार्येणैवं व्याख्यातम्—“पुराणम् पुरातनवृत्तान्तकथनरूपम् आख्यानम्” ।[10] क्वचित्तु ‘पुराणवित्’ इत्ययमपि प्रयोगः । तत्र चास्य शब्दस्याभिप्रायोऽपि व्यज्यत इव । तद्यथा—

**येत आसीद् भूमिः पूर्वा यामद्धातय इद् विदुः ।**
**यो वै तां विद्यान्नामथा स मन्येत पुराणवित् ।।**[11]

अस्य मन्त्रस्य भाष्ये सायणाचार्यः कथयति[12]—"ताम् अतीतकल्पस्थां भूमिं 'यो वै' यः खलु 'नामथा' नामप्रकारेण तस्यां यद्यद् वस्त्वस्ति तत् सर्वं नामग्राहं 'विद्यात्' जानीयात्······'पुराणवित्' पुरातनस्य अर्थस्य वेदिता स विद्वान् मन्येत इदानीन्तनीमपि सर्वां भूमिं मन्येत जानीयात् ।"

अत्र तु पुरातनस्य अर्थस्य वेदिता एव पुराणवित् कथितः । इत्यञ्चात्र पुरातनोऽर्थः, पुरातनवृत्तान्तो वा पुराणपदस्य बोध्यो न तु कश्चिद् ग्रन्थविशेषः । किञ्चात्रापि जगतः पूर्वावस्थाकथनपूर्वकवचनमेव पुराणशब्दस्यार्थ इति स्वीकर्तुं शक्यते । कथितैवात्र जगतः पूर्वावस्था ।

अयं च पुराणशब्दो गोपथशतपथादिषु[13] ब्राह्मणग्रन्थेष्वपि बहुशः प्रयुज्यते । तत्र चायम् इतिहासादिशब्दैः साकं दृश्यते । शतपथब्राह्मणे तु पुराणादीनां स्वाध्यायोऽपि स्तूयते ।[14] तेन चेदं प्रतिभाति यत् पुराणेति कस्यचित् सन्दर्भस्य नाम । अतश्च पुनरपि संशयो जायते यत् तेन नाम्ना किं ब्रह्मवैवर्त्तादीनि पुराणानि ग्राह्याणि, आहोस्विज्जगतः पूर्वावस्थाकथनपूर्वकाणि वचनान्येव । अत्र च संशये प्रमाणनि युक्तयश्च मार्गं दर्शयेयुः ।

तथाहि—सायणाचार्यस्य ऋग्वेदभाष्यभूमिकायामयं तावत् पूर्वपक्षः—"ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते 'यद् वै ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः' (तै० आ० २.९) इति ।" अस्मिंश्च पूर्वपक्षे आचार्येणोच्यते—"मैवम् । विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात् । देवासुराः संयत्ता आसन् (तै० सं० ५.३.११.१) इत्यादय इतिहासाः । इदं वा अग्रे नैव किञ्चनासीत् (तै० ब्रा० २.२.९.१) इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम् ।"[15] अनेन च सायणाचार्यस्य व्याख्यानेन ज्ञायते यद् ब्राह्मणान्तर्गतं जगतः प्रागवस्थाकथनपूर्वकं सर्गप्रतिपादकं वचनमेव पुराणशब्देनाभिधीयते ।

अत्र हि ब्राह्मणावान्तरभागस्य पुराणत्वं ब्राह्मणप्रसङ्गेनैव प्रतिपादितम् । तादृशा मन्त्रावान्तरभागा अपि पुराणशब्दाऽभिधेया इति निवेदितमेव पुरस्ताद् । तथा च ब्राह्मणग्रन्थस्यांशविशेषो पुराणसंज्ञकः मन्त्रांशविशेषश्च । न हि सर्वत्र ब्राह्मणग्रन्थस्यशविशेषः पुराणमिति स्वीकर्तुं शक्यम्; अथर्ववेदेऽपि तादृशस्य पुराणशब्दस्य दर्शनात्, ब्राह्मणग्रन्थानाञ्चाथर्ववेदाद् अर्वाचीनत्वात् । सायणाचार्योऽपि 'ब्रह्माणाद्यवान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्' इत्यत्र आदिशब्दं (ब्राह्मणादि-) गृह्णाति । स्वामिदयानन्देनापि च ब्रह्मयज्ञप्रकरणविषयिकां शङ्कां समादधतैव ब्राह्मणांशविशेषस्य पुराणत्वं प्रतिपादितम् । न हि तत्राथर्ववेदस्थः पुराणशब्दोऽपि लक्षितः । ततश्च मन्त्रेषु ब्राह्मणेषु च प्रागवस्थाप्रतिपादकं वचनमेव पुराणशब्दस्याभिधेयम्, न तु श्रीमद्भागवतादिपुराणम् इति सुवचम् । मन्त्रेषु ब्राह्मणेषु च पुराणम् इत्येकवचनस्य, पुराणानीति बहुवचनस्य वा प्रयोग उपलभ्यते । न तु कस्यचित् प्रचलितस्य पुराणस्य संकेतोऽपि तत्र दृश्यते ।

आस्तां तावन्मन्त्राः ब्राह्मणानि वा । अन्यत्रापि प्राचीने वाङ्मये न क्वचित् श्रीमद्भागवतादीनां संकेतो दृष्टचरः । यद्यपि पाणिनिकृतसूत्रेषु महाभारतस्य कतिपये संकेताः समुपलभ्यन्ते, तथापि तत्र प्रचलितपुराणानां संकेतोऽपि न दृश्यते । महाभाष्यकारेण भगवता पतञ्जलिना वामनजयादित्यादिभिः व्याख्याकृद्भिरपि 'तेन प्रोक्तम्'[16] कृतेः ग्रन्थे[17] इत्यादिसूत्राणां व्याख्याने न प्रचलितपुराणानामुल्लेखो विधीयते । यत्तु आपस्तम्बधर्मसूत्रे (२.९.२४.६) 'इति भविष्यत्पुराणे' इत्युक्तं तत्रापि न भविष्यत्पुराणसंज्ञकः पुराणविशेषो गृह्यते, अपितु भाविघटनाबोधकं वाक्यमेव । अस्मिश्चार्थे पुराणं भविष्यम् इति पदजातस्य प्रयोगो महाभारतेऽपि समुपलभ्यते;[18] इत्यभियुक्ताः ।[19]

अपि च श्रीमद्भागवतादीनां कालनिर्णयादपि सुनिश्चितमेतद् यन्न केवलं मन्त्रब्राह्मणयोः, धर्मसूत्रेषु वा, अपि तु महाभारतेऽपि प्रचलितपुराणानामुल्लेखो न विद्यते। तथा च विद्वांसो विवेचयन्ति—पुराणानां द्वौ प्रवाहौ, इति प्राचीनवाङ्मये पुराणस्वरूपविषयकविवरणभेदाद् निश्चीयते। प्रथमः प्रवाहो व्यासात् प्राचीनः यत्र पुराणवचनानि अव्यवस्थितानि विकीर्णानि चाऽभवन्। द्वितीयस्तु कृष्णद्वैपायनव्यासाद् आरब्धः, तत एव च पुराणसंहितानां निर्माणं क्रमशश्चोपबृंहणमपि जातम्, इति।[20] इत्थञ्च यत् समीक्षकैरुच्यते वेदानां धार्मिकभागात् पृथग् इतिहासपुराणस्य काचित् परम्पराऽऽसीत् यतो हि सर्वत्रैव इतिहासपुराणम् इति पृथगेव निर्दिश्यते,[21] तत्रापि पुराणवाक्यानां याऽव्यवस्थिता प्रथमा धारा सैव मन्तुं शक्यते, नान्या। किञ्च कैश्चित् प्रमाणैरेतदपि ज्ञायते यत् व्यासादर्वाचीनाः चतस्रः पुराणसंहिता अभवन् यासु काचित् कृष्णद्वैपायनस्य शिष्येण रोमहर्षणेन प्रणीता। ताश्च प्रचलितपुराणानामाविर्भावात् प्रागेव विलुप्ताः। परं प्रचलितपुराणानां कर्तारस्तेषां विषये नितरामनभिज्ञा नासन्, यतो हि ते 'पुराणसंहिता'- 'आदिपुराण'—इत्यादिकान् शब्दान् प्रयुञ्जते। अतएव प्रचलितपुराणानां सम्बन्धो व्यासेनापि वक्तुं शक्यते। परमस्य नायमभिप्रायो यत् व्यासकर्तृकाण्येव समुपलभ्यमानानि पुराणानि[22]। वस्तुतः इमानि बहुकर्तृकाणि[23] काले काले च समुपबृंहितानि। एषां ये प्राचीनतमा भागास्ते ख्रीष्टाब्दारम्भकाले विरचिताः। एषामधिकतरभागास्तु षष्ठशताब्दीमारभ्य द्वादशशताब्दीपर्यन्तमेव संकलिताः।[24]

ततश्चैषां नामापि प्राचीनेषु ग्रन्थेषु नोपलभ्यते। न चैषां संख्याऽपि। यत्तु रामरहस्योपनिषदि 'पुराणेषु अष्टादशसु' इति प्रयोगो दृश्यते तत्तु न किञ्चित्करम्। न तिरोहितमेवोपनिषदोऽवगाहमानानां विदुषां यत् नितरामर्वाचीनेयमुपनिषद्। यच्च महाभारते[25] 'अष्टादशपुराणानाम्' इत्येतत्पदम् दृग्गोचरीक्रियते तदपि श्रीमद्भागवतादिपुराणानां महाभारतात् पूर्वकालभावित्वं न प्रमाणयितुमलं यतो विविधैः प्रमाणैः युक्तिभिश्च निर्धारितमेतत् यत् वर्तमानपुराणग्रन्था महाभारताद् अर्वाचीना एव।[26] श्रीमद्भागवतपुराणेऽपि चैतद् व्यज्यते यत् महाभारतानन्तरं श्रीमद्भागवतस्य रचनाऽजायत।

एतदुक्तं भवति प्राचीनवाङ्मये यः पुराणशब्दः प्रयुज्यते न स श्रीमद्भागवतादिपरः। वेदेषु, ब्राह्मणेषु, सूत्रग्रन्थेषु च तस्यान्यार्थपरत्वं सुस्पष्टमेव। महाभारतेऽपि नायं शब्दः प्रचलितपुराणानां संज्ञा, इति प्रमाणैः निश्चीयते। अतश्च इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् इत्यस्मिन् महाभारतवाक्ये पुराणशब्देन श्रीमद्भागवतादिपुराणानि न ग्रहीतुं शक्यन्ते; अपितु महाभारतात् प्राचीना एव केचन सन्दर्भाः। प्रमाणैश्चेदमपि निश्चीयते यत् मन्त्रब्राह्मणयोरागतानि जगतः प्रागवस्थाकथनपूर्वकाणि वचनानि पुरा किल पुराणशब्देनाभिहितानि। विशेषेण तु तादृशानि वचनानि ब्राह्मणेषु समुपलभ्यन्ते। तानि च अन्यब्राह्मणांशवद् वेदोपबृंहकाणि, वेदार्थविशदीकराणि इति यावत्, इत्यत्र न सन्देहस्यावकाशः। कालान्तरेण चान्यैरपि विविधविषयैः सह तादृशानि वचनानि भागवतादिषु प्रचलितपुराणेष्वपि संकलितानीत्यन्यदेतत्।

---

**सन्दर्भ संकेत**

१. आदि०, १. २६७।

२. श्रीभाष्यम्, २.१.१।

३. तत्रैव, २.१.१।

४. ऋग्वेदभाष्यभूमिका (भारतीय विद्याप्रकाशन वाराणसी, १९६९), पृ० १३७।

५. पुनः पुनर्जायमाना पुराणी। १. ९२. १०।
सना पुराणमध्येमि। ३.५४.९,
पुराणमोकः सख्यं शिवं वां। ३.५८.६।

यज्ञे जाते पितरो नः पुराणे । १०.१३०.६ ।

६. पुराणी चिरन्तनी, नित्येत्यर्थः । सायणभाष्यम्, ऋग्०, १. ९२.१० ।
पुराण पुरातनम् । सायणभाष्यम्, ऋग्० ३.५८.६ ।

७. अथर्ववेदः, का० १५ सू० ६ मं० १०–१२ ।

८. ऋग्वेदादिभाष्यभूमिका (रामलाल कपूर ट्रस्ट, अमृतसर १९६७), वेदसंज्ञाविचारः, पृ० ९४ ।

९. तत्रैव, पृ० ९४—९५ ।

१०. अथर्ववेदः, का० ११ सू० ७ मं० २४ ।

११. तत्रैव, का० ११ सू०८ मं० ७ ।

१२. सायणभाष्यम्. अथर्ववेदः, का० ११ सू० ८ मं० ७ ।

१३. (क) गोपथ०, १.१०; २.१० ।
(ख) शतपथ०, ११. ५.६.८; १४.६.१०.६; १३..४.३. १२—१३ ।

१४. (यः) इतिहासपुराणं गाथा नाराशंसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद् देवाँस्तर्पयति ।
११.५.६.८ ।

१५· ऋग्वेदभाष्यभूमिका, पृ० ६: ।

१६. अष्टाध्यायी, ४.३.१०१ ।

१७. तत्रैव. ४.३.११६ ।

१८ एतत्ते सर्वमाख्यातं ब्रह्मन् भक्तिमतो मया ।
पुराणं च भविष्यं च सरहस्यं च सत्तम । शान्ति०, ३३९, १०८—१०९ ।

१९ रामशंकर भट्टाचार्यः, पुराणगत वेदविषयक सामग्री का समीक्षात्मक अध्ययन, (हिन्दी साहित्य सम्मेलन, प्रयाग, १९६५) पृ० १७ ।

२० तत्रैव, पृ० ९ ।

२१. The Itihasa and the Purana formed—since they are always separately mentioned—a distinct tradition from that of the Samhitas, the religious literature. T. G. Mainkar. The upabimhana and the Rigveda interpretation (L. D. Institute of Indology, Ahmedabad 9), P. 5

२२. द्र०, पुराणगतवेदविषयक सामग्री का समीक्षात्मक अध्ययन, पृ० २३ ।

२३. तत्रैव, पृ० २३ ।

२४. P. V. Kane, History of Dharmashastra, vol. I, P. 161.

२५. महाभारते–स्वर्गारोहणम्, ५.४७

२६. चिन्तामणिविनायकवैद्यः, महाभारतमीमांसा (हिन्दी भाषानुवाद, बनारस), पृ० ५९ ।

———

भूतपूर्व अध्यक्ष,
**दयानन्द अनुसंधान पीठ**
**(कुरुक्षेत्र विश्वविद्यालय)**
**ब्रह्मपुरी, मेरठ ।**

□ प्रो० विजेन्द्रकुमार तोमर

# 'ब्राह्मण-साहित्य के अध्ययन का सर्वेक्षण

वैदिक वाङ्मय में ब्राह्मण-साहित्य का विशेष महत्त्व है। ब्राह्मण-साहित्य पर सम्पादन, अनुवाद, संकलन, टिप्पणी, भाष्य, कोश-निर्माण, तुलनात्मक एवं आलोचनात्मक विवेचन तथा सांस्कृतिक अध्ययन के रूप में कार्य हुआ है। प्रस्तुत लेख में ऋग्यजुःसाम और अथर्ववेद के ब्राह्मणों के क्रम तथा प्रथम से अंतिम अध्ययन के प्रकाशित क्रम से सर्वेक्षण प्रस्तुत किया गया है। साथ में प्रत्येक ग्रन्थ की संक्षिप्त विशेषताएँ दी गयी हैं और इसके पश्चात् पाश्चात्य एवं भारतीय विद्वानों के कार्यों का संक्षिप्त मूल्यांकन किया गया है। ब्राह्मण-साहित्य के अध्ययन के सर्वेक्षण से पूर्व हमें 'ब्राह्मण-साहित्य से क्या अभिप्राय है और ब्राह्मणों का प्रतिपादित विषय क्या है ?' यह समझना आवश्यक है—

स्वामी दयानन्द सरस्वती ने अपनी पुस्तक 'अनुभ्रमोच्छेदन' में ब्राह्मण शब्द का अर्थ वेदों के व्याख्यान किया है यथा—

**'ब्रह्मणां वेदानामिमानि व्याख्यानानि ब्राह्मणानि।'[१]**

प्रो० मॉरिस विन्टरनिट्ज ने 'हिस्ट्री ऑफ इंडियन लिटरेचर' में ब्राह्मण शब्द का जो अर्थ किया है उसका हिन्दी अनुवाद इसप्रकार है--

"ब्राह्मण शब्द का अर्थ है—यज्ञ के विधि-विधानों में कुशल विद्वान् पुरोहितों द्वारा यज्ञों के अवसर पर प्रयोग की जाने वाली संहिता भाग की विधियों का संकलन। समष्टि रूप में इस शब्द का अर्थ है—यज्ञगत पुरोहितों के उच्चारणों एवं विवादों का संग्रह।"[२]

विद्याधर शर्मा गौड़ ने शतपथ ब्राह्मण की भूमिका में ब्राह्मण शब्द का अर्थ 'वेदचतुष्टय मंत्राणां कर्मसु विनियोजकः कर्मविधायको नानाविधानादीतिहासाख्यानबहुलोज्ञानविज्ञानपूर्णो भागो ब्राह्मणभाग' किया है।[३]

थोड़े शब्दों में कहे तो वेद मन्त्रो एवं 'यज्ञ-विज्ञान' का गम्भीर विवेचन करने वाले ग्रन्थ ही ब्राह्मण हैं।

ब्राह्मणों में मुख्यतः कर्मकाण्ड सम्बन्धी विधानों के वर्णन के साथ-साथ वेदमन्त्रों और वैदिक शब्दों की निष्पत्ति बतायी गयी है। इसके अतिरिक्त यज्ञ सम्बन्धी अनुकरणीय एवं निषेधात्मक बातों का वर्णन किया गया है। कहीं-कहीं ब्रह्मतत्त्व के विषय में विचार हुआ है। यज्ञीय विषयों की पुष्टि में ऋषियों, आचार्यों एवं राजवंशों की आख्यायिकाएँ (कथाएँ) दी गयी हैं। ब्राह्मणग्रन्थों की एक बड़ी विशेषता यह भी है कि उनमें तात्कालिक मानवजाति के सामाजिक, धार्मिक और नैतिक जीवन की परम्परा का पता लगाने के लिए पर्याप्त अनुसंधानोपयोगी सामग्री मिलती है। पं० बलदेव उपाध्याय ने ब्राह्मणों के वर्ण्य विषय को प्रस्तुत करते हुए लिखा है कि—"ब्राह्मणों में मन्त्रों, कर्मों एवं विनियोगों की व्याख्या है। ब्राह्मणों की अन्तरंग परीक्षा करने पर स्पष्ट है कि ब्राह्मण-ग्रन्थ यज्ञों की वैज्ञानिक तथा आध्यात्मिक मीमांसा प्रस्तुत करने वाला एक महनीय विश्वकोश है।"[४]

पं० भगवद्दत्त जी ने 'वैदिक वाङ्मय का इतिहास' पुस्तक में 'ब्राह्मण-ग्रन्थों का प्रतिपादित विषय'

७. (क) वितर्कबाधने प्रतिपक्षभावनम् । यो० सू० २.३३
(ख) प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति । यो० भा० २.४

८. विच्छिद्य विच्छिद्य तेन तेनात्मा पुनः समुदाचरन्ति इति विच्छिन्ना।
कथम् ? रागकाले क्रोधस्यादर्शनात् । न हि रागकाले क्रोधः समुदाचरति,
सहितं वा प्रसुप्ततनुविच्छिन्नो भवति । —यो० भा० २.४

९. विषये यो लब्धवृत्तिः स उदारः । —यो० भा० १.४, पृ० १४६

१०. तत्र विदेहप्रकृतिलयानां योगिनां प्रसुप्ताः क्लेशाः, क्रियायोगिनां तनवः, विषयसङ्गिनां विच्छिन्नाः उदाराश्च भवन्ति । मणिप्रभा० २.४ पृ० ६४

११. ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्यं नारभन्ते ते सुप्ता इत्युच्यन्ते । यथा बाल्यावस्थायाम्, बालस्य हि वासनारूपेण स्थिता अपि क्लेशाः प्रबोधसहकार्यभावे नाभिव्यज्यन्ते ।
भोजवृत्ति २.४ पृष्ठ ६३

१२. ते तनवो ये स्वप्रतिपक्षभावनया शिथिलीकृतकार्यसम्पादनशक्तयो वासनावशेषतया चेतस्यवस्थिताः प्रभूतां सामग्रीमन्तरेण स्वकार्यमारब्धुमक्षमाः, यथा अभ्यासवतो योगिनः । ते विच्छिन्ना ये केनचिद् बलवता क्लेशेनाभिभूतशक्तयस्तिष्ठन्ति ।···ते उदाराः ये प्राप्तसहकारिसन्निधयः स्वं स्वं कार्यमभिनिर्वर्तयन्ति ।—भोजवृत्ति २.४. पृ० ६३

१३. क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः । यो०सू० २.१२

१४. सति मूले तद्विपाको जात्यायुर्भोगाः ।। यो० सू० २.१३

१५. विशेष-विवरण हेतु द्रष्टव्य-पातञ्जलयोगशास्त्र एक अध्ययन, पृ० ९० ।

१६. अत्र भोगो मुख्यं फलम्, तन्नान्तरीयके च जात्यायुषी ।—नागोजिवृत्ति, २.१३, पृ० ७३ ।

१७. क्लेशावनद्धः कर्माशयो विपाकारम्भीभवति, नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावो वेति ।
—योगभाष्य २.१३ ।

१८. तस्माज्जन्मप्रायणान्तरे (मरणान्तरे) कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनीभावेनावस्थितः प्रायणाभिव्यक्त एव प्रघट्टकेन मिलित्वा मरणं प्रसाध्य सम्मूच्छित एकमेव जन्म करोति ॥ तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति । तस्मिन्नायुषि तेनेव कर्मणा भोगः सम्पद्यते
—योगभाष्य, २.१३ ।

१९. दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वात्, द्विविपाकारम्भी वा आयुर्भोगहेतुत्वात्, नन्दीश्वरवन्नहुषवद्वा इति । यो० भा० २.१३ ।

२०. यो ह्यदृष्टजन्मवेदनीयो नियतविपाकस्तस्य त्रयी गतिः कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्यावाप मनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम् । वही, २.१३ ।

२१ द्वे द्वे कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोपहन्ति । योगभाष्य, पृ० १७१ से उद्धृत ।

२२. सः कर्माशयो द्विविधः आरब्धफलोऽनारब्धफलश्च । तत्रारब्धफलः उक्त एकजन्मावच्छिन्नः । अनारब्धफलोऽपि त्रिविधः, शुक्लः कृष्णः शुक्लकृष्णश्च । नागोजिवृत्ति २.१३ ।

२३. (क) भोगाभ्यासमनु विवर्द्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति तस्मादनुपायः सुखस्य भोगाभ्यासः ।
योगभाष्य २.१५ ।

(ख) विषयाणामुपभुज्यमानानां यथायथं गर्द्धाभिवृद्धेस्तदप्राप्तिकृतस्य दुःखस्यापरिहार्यतया दुःखान्तर-साधनत्वाच्च । त्वेव दुःखरूपता । भोजवृत्तिः २.१५ ।

२४. क्लेशमूलकर्माशयो दृष्टादृष्टजन्मवेदनीयः । सति मूले तद्विपाको जात्यायुर्भोगाः ॥
परिणामतापसंस्कार दुःखे गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ यो० सू० २.१२,१३,१५

२५. ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् । ४.८।

२६. (क) कामान्यः कामयते मन्यमानः सः कामभिर्यायते यत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविशन्ति कामाः ॥ मुण्ड० ३–२–२ ।

(ख) यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेति कौन्तेय सदा तद्भावभावितः ॥ गीता० ८.६ ।

२७. (क) ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन । गीता ४. ३७ ।

(ख) ज्ञानाग्निदग्धकर्माणं तमाहुँ पंडितं बुधाः । गीता ४.१९

———

रीडर–अध्यक्ष, अनुसंधान विभाग
**लालबहादुर शास्त्री केन्द्रीय संस्कृत विद्यापीठ,**
**शहीद जीतसिंह मार्ग, नई दिल्ली, १६ ।**

□ डॉ० जयदत्त उप्रेति शास्त्री

# स्वर्गापवर्गयोर्भेदाऽभेदविमर्शः

सनातनवैदिकधर्मानुयायिनां जनानां स्वर्गापवर्गयोर्विषये प्रायेण एषा धारणा विद्यते यत् शब्दाविमावर्थतो भिद्येते । यद्यपि सूक्ष्मार्थत्वात् परोक्षविषयत्वादनयोः हस्तामलकवत् प्रत्यक्षं प्रदर्शनं कर्तुं न शक्यते, तथापि निगमागमवचांसि यथाहुस्तदनुसारेण किंचिद् विवेचनं प्रस्तोतुं प्रयत्यते ।

तदिह सुविदितं विदुषां यद् मीमांसका याज्ञिकाश्च भृशं स्मरन्ति—"स्वर्गकामो यजेत", "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्येवमादीनि आर्षवचनानि । एषामर्थः स्फुटः—यज्ञात् कृतात् स्वर्गो लभ्यते, इति कर्तव्यो यज्ञ इति । अन्ये केचन दानेन, केचन गङ्गास्नानेन, केचन राम-कृष्ण-हरि-हराद्यन्यतमनामजपमात्रेण, केचन तीर्थभ्रमणेन, केचित् कण्ठीतिलकभस्मरुद्राक्षादिधारणेन, केचित्सत्कर्मणा, केचिज्ज्ञानेन, केचित् पुनरुभाभ्यां ज्ञानकर्मभ्यां स्वर्गं चापवर्गं वा सुलभं मन्यन्ते । गङ्गास्नानस्य, गङ्गानामजपस्य, गङ्गादर्शनस्य चाद्भुतं माहात्म्यं गङ्गाभक्ता वदन्ति । तथाहि "गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥' इति तेषां सुप्रसिद्धः श्लोकः । द्वाविंशतिवर्षपूर्वमेकदा अहं वाराणस्यां ब्रह्मघट्टे कस्यचित् सम्बन्धिनः पार्श्वे कतिपयदिनानि यावन्न्यवसम् । तत्र मया दृष्टं यन्मध्यरात्रौ त्रिवादनावसरे प्रत्यहं कश्चिद् गङ्गाभक्तः स्नानार्थं गङ्गाभिमुखेषु सोपानेषु अवतरन् गङ्गादर्शने जाते सति तारस्वरेणाघोषं करोति स्म—"गङ्गे तव दर्शनान्मुक्तिः" इति । घोषममुं श्रुत्वा एकतो गङ्गाभक्तस्य श्रद्धामेकतश्च मुक्तेर्दुरवाप्यतां विचार्य मम मनसि एष प्रश्नः समुत्थितः, यदि गङ्गादर्शनमात्रेणैव सुलभोपायेन मुक्तिर्लभ्येत तर्हि गङ्गायां स्नानादथवा तत्रैव निमज्जनान्मुक्तेरपि परतरं पदं कथं न लभ्येत ? अथवा मुक्त्यर्थमुपदिश्यमानैर्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपैर्योगाङ्गैर्वा सांख्यादिशास्त्रोक्तसत्वपुरुषान्यताख्यात्यादिभिर्वा किं नामोपपादितं स्यात् ? किंवा, "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ यजुर्वेद ३१–१८॥ इत्येवमादिभिर्वेदवाक्यैः कृतं स्यात्, इति । अस्तु तावत्प्रकृतमनुसरामः ।

तत्र स्वर्गं मोक्षं च भिन्नरूपेणानुमन्यमानानां स्वर्गसाधनान्यन्यानि कर्माणि भवन्ति, मोक्षसाधनानि चान्यानि । ये तु स्वर्गमोक्षयोरनर्थान्तरं मन्वते तेषां तु तुल्यमेव साधनं स्वर्गस्य वा मोक्षस्य वा । अत्र विषये इमे प्रश्ना विचारार्हा भवन्ति, (१) स्वर्गः कः, तस्य किं स्वरूपम् ? (२) मोक्षः कः, तस्य किं स्वरूपम् ? (३) स्वर्गमोक्षौ सरूपौ समानार्थकौ स्तः आहोस्विदसरूपौ नानार्थौ ? (४) मनुष्येण वर्तमान-जीवने स्वर्गो वा मोक्षो वा लब्धुं शक्यते, उताहो न वेति । तत्र क्रमेण विचारः प्रस्तूयते ।

स्वर्गः कः, किं च तस्य स्वरूपम् १—कठोपनिषदि नाचिकेतोपाख्यानप्रसंगे स्वर्गस्येदं रूपं श्रूयते—

**स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।**

**उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ कठोप० १–१-१२ ॥**

**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।**

**स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥ कठोप० १-१-१३॥**

इतिः अथर्ववेदे स्वर्गस्वरूपनिरूपणपरा इमे मन्त्राः सन्ति—

अनस्थाः पूताः पवनेन शुद्धाः शुचयः शुचिमपि यन्ति लोकम् ।
नैषां शिश्नं प्रदहति जातवेदाः स्वर्गे लोके बहु स्त्रैणमेषाम् ।।
एष यज्ञानां विततो बहिष्ठो विष्टारिणं पक्त्वा दिवमा विवेश ।

आण्डीकं कुमुदं सं तनोति बिसं शालूकं शफको मुलाली । एतास्त्वा धारा उपयन्तु सर्वाः स्वर्ग्रे लोके मधुमत् पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ।।

घृतह्रदा मधुकूलाः सुरोदकाः क्षीरेण पूर्णां उदकेन दध्ना । एतास्त्वा धारा उपयन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ।।

चतुरः कुम्भांश्चतुर्धा ददामि क्षीरेण पूर्णां उदकेन दध्ना । एतास्त्वा धारा० ।।
इममोदनं नि दधे ब्राह्मणेषु विष्टारिणं लोकजित स्वर्गम् ।
स मे मा क्षेष्ट स्वधया पिन्वमानो विश्वरूपा धेनुः कामदुघा मे अस्तु ।।

अथर्ववेद ४–३४–२–८।।

इत्येषु मंत्रेषु सर्वभौतिकसमृद्धिसम्पन्नतया लभ्यमानसुखस्यैवापरं नाम स्वर्गोऽस्तीति ध्वन्यते । अन्यः कश्चित् कविराह--

"सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी,
सन्मित्रं सुधनं स्वयोषितिरतिश्चाज्ञापराः सेवकाः ।
आतिथ्यं गुरुपूजनं प्रतिदिनं मिष्टान्नपानं गृहे,
साधोः संगमुपासते हि सततं स्वर्गो गृहस्थाश्रमः ।।"

इति । अत्र बहुविधसुखसमुपेतो गृहस्थाश्रम एव स्वर्गमिध, इति तन्मतं स्पष्टम् ।

सुप्रसिद्धमीमांसककुमारिलभट्टस्य मते पुनः—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्,
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ।।" श्लोकवार्तिकम् ।। इति स्वर्गलक्षणम् ।

अत्र यज्ञादिना नैरन्तर्येण प्राप्तदुः खराहित्यस्यैव नाम स्वर्ग इत्युक्तम् । यज्ञादिः स्वर्गप्राप्तौ हेतुः साधनं वेति ब्राह्मणादिषु भृशमुच्यते । तथाहि, "स एष यज्ञायुधी यजमानोऽजसा स्वर्गं लोकं याति ।" (मीमासादर्शनशाबरभाष्यम् १–१५), "स एष यज्ञायुधी यजमानः—योस्य स्वर्गे लोको जितो भवति तमभ्यत्येति तमेते सन्ताप्या अग्नयो यथा पुत्राः पितरम्—एनं हैवैनमुपस्पृशन्ति प्र हैवैनं कल्पयन्ति ।" (शतपथब्राह्मणम् १२।५।२।८।), "स एष यज्ञायुधी यजमानः स्वर्ग लोकमेतीति ब्राह्मणम् (निदानसूत्रम् २–६) इति ।

सुप्रसिद्धस्य वेदभाष्यकारस्य श्रीमद्दयानन्दसरस्वतीस्वामिनो मते स्वर्गस्येदं लक्षणम्—"स्वर्ग नाम सुख विशेष भोग और उसकी सामग्री की प्राप्ति का है । (स्वमन्तव्यामन्तव्यप्रकाशः,४२), तथा "जो विशेष सुख और सुख की सामग्री को जीव का प्राप्त होना है, वह स्वर्ग कहाता है । (आयोद्देश्यर-त्नमाला, १४) । इत्येवं स्वर्गस्वरूपप्रतिपादनपराणि बहूनि वचनानि प्राक्तनग्रन्थेषु समुपलभ्यन्ते । उदाहृतेषूदाहरणेषु मध्ये कठोपनिषदुक्तं विहाय सर्वाणि लौकिकसुखसम्प्राप्तिमेव स्वर्गनाम्ना वर्णयन्ति । कुमारिल-भट्टाचार्योक्तावपि कठोपनिषदुक्तवत् सर्वथा अमृतत्वस्य दुःखराहित्यस्य प्रतिपादनात् स्वर्गपदार्थो मोक्षेऽस्तीति ध्वन्यते ।

**मोक्षः कः, किं च तस्य स्वरूपम् ?**.—पुरुषार्थचतुष्टयमध्ये चरमं परम च पुरुषार्थं मोक्षमेवाहुः । ते च पुरूषार्था धर्मार्थकाममोक्षाख्याः समस्ते वैदिके लौकिके च वाङ्मये निपुणं व्याख्याताः । तत्र सर्वविधाद्

दुःखात् विशेषतो जन्ममरणप्रबन्धाद् जीवस्य व्यपगतत्वं मोचनं वा मोक्ष उच्यते। मोक्षस्यैव कैवल्य-मुक्ति-निःश्रेयसाऽपवर्गनामभिरपि व्यपदेशो भवति। विद्वांसो जना विविधरीत्या मोक्षावाप्तिं वर्णयन्ति। तथा चोदाहरणानि भवन्ति—

"न त्वदृते अमृता मादयन्ते" (ऋग्वेदः।७।११।१), "यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त" (यजुर्वेदः ३२-१०), "तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (यजु०३१-१८), "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" (यजु०४० १४), "यद् गत्वा न निवर्तन्ते तद्धाम परमं मम"। (भगवद्गीता), "अथ त्रिविधदुःखादत्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" (सांख्यदर्शनम् १।१), "प्रमाण-प्रमेय-संशय-प्रयोजन···निग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः"। (न्यायदर्शनम् १-१-१), "धर्मविशेष-प्रसूताद्—द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्वज्ञानान्निःश्रेयसम्"। (वैशेषिकदर्शनम् १-१-४), "तदा द्रष्टुः स्वरूपेऽवस्थानम्", "सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति", "पुरुषार्थ-शून्यानां गुणानां प्रसिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्ति रिति"। (योगदर्शनम् १-३, ३—५५, ४-३४). "सम्पद्याविर्भावः स्वेन शब्दात्", 'मुक्तः प्रतिज्ञानात्",। (वेदान्तदर्शनम् ४-४-१,२)। अत्र, "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" छान्दोग्योपनिषद् ८-१२-३), "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा० उ० २-१२-१) इत्युपनिषद्व-चनान्यपि सम्बद्धतया निभालनीयानि। मुक्तिः—"अर्थात् सर्वदुःखों से छूटकर बन्धरहित सर्वव्यापक ईश्वर और उसकी सृष्टि में स्वेच्छा मे विचरना, नियत समय पर्यन्त मुक्ति के आनन्द को भोग के पुनः संसार में आना। (स्वमन्तव्यामन्तव्यप्रकाशः,१२)।, मुक्तिः—अर्थात् जिससे सब बुरे काम और जन्म-मरणादि दुःखसागर से छूटकर सुखरूप परमेश्वर को प्राप्त होके सुख ही में रहना है, वह मुक्ति कहाती है। (आर्योद्देश्यरत्नमाला, २६) तदेवं संक्षेपतः सूत्रदिशा मोक्षस्वरूपं वर्णितम्।

**स्वर्गमोक्षौ सरूपौ समानार्थकौ, आहोस्विदसरूपौ भिन्नार्थौ**—उक्तविवरणेभ्यः स्पष्टतया वक्तुं शक्यते यत् अस्ति स्वर्गापवर्गयोर्भेदः। यावता स्वर्गे बहुविधं लौकिकं सुखम् ऐश्वर्यं चोपभुज्यते सशरीरेण सता जीवेन, मोक्षे त्वेतद् विपरीतमेव सर्वं श्रूयते। तत्र त्वात्मनः शरीरसंयोग एव नावतिष्ठते, तर्हि का कथा शरीरेन्द्रियादिभिर्लौकिक-भौतिकसुखोपभोगस्य ? एवमनयोर्द्वयोस्तत्वयोस्तात्विको भेद इति स्थितम्।

परमत्रैदमप्यवधेयम्। क्वचिदीदृशान्यपि वर्णनानि दृश्यन्ते, येभ्योऽनयोः स्वर्गमोक्षयोरभेदोऽप्य-वगम्यते। तथा चेमानि वर्णनानि स्वर्गशब्दं मोक्षवाचकं प्रतिपादयन्ति—

(१)—'सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूमा दिवं पृथिव्या अध्यारुहामाविदाम देवान्स्व-ज्योतिः। (यजुर्वेदः ८-५२) अस्य मंत्रस्य भाष्ये, उवटाचार्यः-स्वः पदं स्वर्गवाचकं, ज्योतिः पदम् आदित्य-वाचकं व्याचष्टे। महीधराचार्योऽपि तथैव व्याचष्टे। स्वर्गे अमृतत्वप्राप्तिरुभयोः सम्मता वेदमंत्रप्रामाण्यात्। दयानन्दाचार्यस्तु—अमृताः = प्राप्तमोक्षाः, अभूम = भवेम,—स्वः = सुखम्, ज्योतिः = विज्ञानविषयम्, इत्यादिरूपेण पदार्थमभिधाय मन्त्रमिमं मोक्षसम्बन्धिसुखप्रतिपादनपरं मन्यते। तथाहि द्रष्टव्यस्तल्लिखितो भावार्थः—' यावत् सर्वेषां रक्षको धार्मिको राजाऽऽप्तो विद्वांश्च न भवेत्, तावत् कश्चिन्निर्विघ्नं विद्यामोक्षा-नुष्ठानं कृत्वा तत्सुखं प्राप्तुं नार्हति, न च मोक्षसुखादधिकतरं किंचित् सुखमस्तीति। अत्र स्वः, ज्योतिः, अमृताः इति पदत्रयसम्बन्धान्न्यमन्त्रोऽयं मोक्षसुखमेव वर्णयति नान्यत् किंचिदपि सिद्धं कठोपनिषदुक्तया

पूर्वोदाहृतया "स्वर्ग लोका अमृतत्वं भजन्त" इति श्रुत्या । अमृतत्वम् अर्थात् मरणराहित्यं मोक्षावस्थायामेव समुपपन्नं देहेन्द्रियसम्बधाभावात् । इति बोध्यम् ।

एवमेव "अगन्म स्वः संज्योतिषाभूम" (यजु०७-४५), "अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय" (यजु०७-४७), "स्वर्देवा अगन्मामृता अभूम" । (यजु० ९-२१, १८-२९), "इमं नो देव सवितर्यज्ञं प्रणय देवाव्यं सखिविदं सत्राजित धनजितं स्वर्जितम्" (यजु०११-८), "येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेनेमं यज्ञ नो नय स्वर्देवेषु गन्तवो" (यजु०१५-५५), 'तेन वय गमेम ब्रध्नस्य विष्टपं स्वो रुहाणा अधि नाकमुत्तमम् ।।" (यजु० १८-५१), "यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् । तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रवा ।, यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मन्त स्तत्रमाममृतं कृधीन्द्रायेन्दो परिस्रवा ।, यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् । स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परिस्रवा ।, यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रवा" (ऋग्वेद ९-११३-७,९,१०,११) । इत्येवमादिषु मंत्रेषु स्वः—स्वर्गामृतत्वसम्बन्धाद् अनुकामम् आनन्दमये ब्रह्मणि सानन्दं विचरणाच्च विज्ञायते यत् स्वः शब्दः, स्वर्गशब्दो वा मोक्षसम्बन्धिसुखस्यापि वाचक इति । अतएव, "स्तुता मया वरदा वेदमाता···व्रजत ब्रह्मलोकम्" ।। अथर्ववेदः १९-७१-१।। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाया ।" यजु०३१-१८।।, "विद्यां चाविद्यां च यस्तद् वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ।" (यजु० ४०-१४) । इत्यादिमन्त्रेषु प्रतिपादितस्य मोक्षस्य उक्तेषूदाहरणेषु स्वर्ग—नाकादिवाच्यार्थेन सह संगतिरस्त्येवेति विज्ञेयम् ।

वस्तुतो जीवस्य द्व एव गती विद्येते—पितृयाणो देवयानश्च । तत्र जायस्व, म्रियस्वेतिरूपा गतिः पितृयाणनाम्ना, जन्ममरणप्रबन्धाद्विरतिर्देवयाननाम्नोच्यते । "द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ।।" (यजु०३१-४७) । इत्यस्मिन्मंत्रे स्फुटमेवैतद्गतिद्वयवर्णनम् । तत्र सशरीरेण जीवेन विशेषतो विदुषा मनुष्येण यद् आभ्युदयिकं सुखं लभ्यते स्वोद्यमेन तदेव लौकिकं श्रेष्ठं सुखं प्रेयोनाम्ना स्वर्गनाम्ना वोक्तं भवति । यत्तु मुक्तावस्थायां विशेषतः शरीरत्यागानन्तरं, "रसो वै सः, रसं ह्येव लब्ध्वाऽऽनन्दीभवति" । (छा० उ०) इति प्रतिपादितं ब्रह्मानन्दरूपं लभ्यते तदेव मोक्षसुखमुच्यते । तस्यैवापरं नाम निश्श्रेयसं वा अपवर्गो वा स्वर्गो वा क्वचिदुक्तं भवति । तदेवं प्रकरणानुसारं स्वर्गशब्दो लौकिकं सुखं सुखोपभोगं वा, अलौकिकं मोक्षविषयकमानन्दं वा द्योतयति वेदादिशास्त्रेषु, इत्यस्माकं निष्कर्षः । अत्रेदमप्यवसेयं यद् वैदिकयज्ञयागादयो यत्स्वर्गमुद्दिश्य विधीयन्ते, प्रतिपाद्यन्ते च वैदिकग्रन्थेषु (यथा वेदसंहितासु ब्राह्मणग्रन्थेषु कर्मकाण्डेषु श्रौतधर्मगृह्यसूत्रेषु, स्मृत्यादिषु च) स उभयरूपोऽभ्युदयात्मको निश्श्रेयसात्मकश्चेति । यज्ञादिकर्मकाण्डश्च परम्परया उभयं साध्नोति । यथाह्याह याजुषमंत्रद्वयभाष्ये महीधराचार्यः, "ज्योतिः स्वयंप्रकाशः परमात्मा यज्ञेन साध्यताम् । पुण्यकर्मानुष्ठानं परमात्मज्ञाने करणम् । ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन । (श० ब्रा० १४-१०-२-२४) इति श्रुतेः । कर्मणैव हि संसिद्धमास्थिता जनकादयः । (भ० गीता ३।२०) इति स्मृतेश्च ।" (यजु० १८-२९, महीधरभाष्यम्) । तथा,—"विद्यां देवताज्ञानं अविद्यां कर्म च तदुभय विद्याविद्यारूपं द्वयं यः सह वेद एकीकृत्य वेद एकेन पुरुषेणानुष्ठेयं जानाति । कर्मकाण्ड ज्ञानकाण्डस्य गुणभूतमित्यर्थः । सोऽविद्ययाग्निहोत्रादिकर्मणा मृत्युं स्वाभाविककर्मज्ञानं मृत्युशब्दवाच्यं तीर्त्वोत्तीर्यान्तः शुद्ध्या कृतकृत्यो भूत्वा विद्यया देवताज्ञानेनामृत देवतात्मभावमश्नुते, प्राप्नोति तद्धि अमृतमुच्यते यद्देवतात्मगमनम् इति श्रुतेः ।" (यजु० ४०-१४ मही० भाष्यम्) एवमेव दयानन्दसरस्वतीस्वामिभाष्येऽपि निगदितम्—"विद्याम्-पूर्वोक्ताम् । (शब्दार्थसम्बन्धविज्ञानमात्रम्)

तत्सम्बन्धिसाधनोपसाधनम् (अविद्याम्)—अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मरूपाम्। (च) एतदुपयोगिसाधनकलापम्। (यः) (तत्) (वेद) विजानीत (उभयम्) (सह) (अविद्यया) शरीरादिजडेन पदार्थसमूहेन कृतेन पुरुषार्थेन (मृत्युम्) मरणदुःखभयम् (तीर्त्वा) उल्लंघ्य (विद्यया) आत्मशुद्धान्तःकरणसंयोगधर्मजनितेन यथार्थदर्शनेन (अमृतम्) नाशरहितं स्वस्वरूपं परमात्मानं वा (अश्नुते)।" भावार्थः—"ये मनुष्या विद्याऽविद्ये स्वरूपतो विज्ञायाऽनयोर्जडचेतनौ साधकौ वर्तेते इति निश्चित्य सर्वं शरीरादिजडं चेतनमात्मानं च धर्मार्थकाममोक्षसिद्धये सहैव संप्रयुंजते ते लौकिकं दुःख विहाय पारमार्थिकं सुखं प्राप्नुवन्ति। यदि जडं प्रकृत्यादिकारणं शरीरादिकार्यं वा न स्यात्तर्हि परमेश्वरो जगदुत्पत्तिं, जीवः कर्मोपासने ज्ञानं च कर्तुं कथं शक्नुयात्तस्मान्न केवलेन जडेन न च केवलेन चेतनेनाथवा न केवलेन कर्मणा न केवलेन ज्ञानेन च कश्चिदपि धर्मादिसिद्धिं कर्तुं समर्थो भवति।" (यजु० ४०-१४, दयानन्दभाष्यम्)। ईशोपनिषदि विद्यां चाविद्यां चेत्यादिमन्त्र एकादशोऽस्ति। तत्र स्वकृतभाष्ये शंकराचार्येण यन्निगदितं तस्यैवानुकरणं पूर्वोदाहृते महीधरभाष्ये विद्यते, उवटभाष्ये खल्वपि तथैवोक्तमस्ति।

वेदेषु प्रयुक्तः स्वः शब्दः (तत्पर्यायः स्वर्गशब्दो वा) लौकिकविषयभोगादिजनितसुखेन सम मोक्षसुखमप्यभिदधातीत्यत्र श्रीमद्दयानन्दसरस्वतीप्रणीतं वेदभाष्यं प्रमाणम्। तद्यथा, "यद्दत्तं यत्परादानं—स्वर्देवेषु नो दधत्"॥ इत्यस्य याजुषमन्त्रस्य (१८-६४) भाष्ये स्वः शब्द ऐन्द्रियसुखवाचको व्याख्यातः, (स्वः) ऐन्द्रियं सुखम् (देवेषु) दिव्येषु धर्म्येषु व्यवहारेषु (नः) अस्मान् (दधत्) दधातु"॥ इति। अथ, "आयुर्यज्ञेन कल्पतां—स्वर्देवा अगन्मामृता अभूम प्रजापतेः प्रजा अभूम वेट् स्वाहा"। (यजु० १८-२९)। इत्यत्र तदीयं भाष्यमित्थं वर्तते—(स्वः) मोक्षसुखम् (देवाः) विद्वांसः (अगन्म) प्राप्नुयाम (अमृताः) जन्ममरणदुःखरहिताः सन्तः (अभूम) भवेम (प्रजापतेः) सकलसंसारस्य स्वामिनो जगदीश्वरस्य प्रजाः। पालनीयाः (अभूम) भवेम (वेट्) सत्क्रियया (स्वाहा) सत्यया वाण्या"॥ इति। तदेवं स्वःस्वर्गशब्दौ प्रकरणानुसारेण लौकिकपारमार्थिकसुखयोर्वाचकाविति सिद्धम्॥

ननु स्वः शब्दः स्वर्गशब्दो वा मोक्षपर्यायो चेत् कथं—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥ (भगवद्गीता ९-२०,२१)।

इत्यादिस्मृतिवचनेषु स्वर्गभोगपुण्यक्षीणतया मर्त्यलोकावाप्तिसम्भवः मोक्षस्याक्षीणत्वादिति चेत्, ? अत्र ब्रूमः। अनयोः श्लोकयोः स्वर्गप्राप्तौ सत्यौ दिव्यभोगसम्प्राप्तिरुक्ता। सर्वे भोगा दिव्या अदिव्या वा शरीरेन्द्रियसंयोगं विना न खलु शक्या भोक्तुम्। अतः प्रकृतश्लोकयोः, एतत्सदृशान्यवर्णनेषु च स्वर्गलोकशब्देन अधिकाधिकसुखमयं जीवनमुच्यते, नान्यत् कश्चन काल्पनिको लोकः। महाभारतपुराणकाव्यादिषु भूयो वर्णितः स्वर्गो लोकोऽस्यामेव पृथिव्यां आर्यावर्तस्योत्तरदिग्गतो हिमालयपार्श्ववर्ती त्रिविष्टबाख्यो देशः (यो ह्यधुना तिब्बतेति ख्यातः) उच्यते स्म। तमेवोद्दिश्य "पितुः प्रदेशास्तव देवभूमयः" (कुमारसम्भवम् ५/४५) इत्येवमादि महाकविकालिदासकृतवर्णनमपि संगच्छते। यद्यपि विद्यते तत्र कश्चिद् जलवाय्वौषध्यादिगतः सुखविशेषः प्राणिनां मनुष्यादीनां तथापि शैत्याधिक्यादि बहुविधं दुःखमपि अपरिहार्यमेव तेषाम्। अत एव

सांख्यतत्वकौमुदीकारेण विदुषा वाचस्पतिमिश्रेण स्थान इदमुक्तं भवति,—"मृष्यन्ते हि पुण्यसम्भारोपनीत-स्वर्गसुधामहाह्लदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखबह्निकणिकाम्"। (सांख्यतत्वकौमुदी, २) इति।

यद्यपि मोक्षावधेरपि परावर्तनं भवति (यथाहि, वेदादिप्रामाण्येन प्रतिपादितं श्रीमद्दयानन्द-सरस्वतीस्वामिना सत्यार्थप्रकाशादिग्रन्थेषु, सुपरीक्षितं चादः सर्वदर्शनसमच्चयनामके ग्रन्थे म० म० श्रीगोपालशास्त्रिणा दर्शनकेसरिणा) तथापि मोक्षावधेरतिशयदीर्घत्वात् तन्मध्ये जन्ममरणप्रबन्धोच्छेदवर्ण-नानि संगच्छन्त एव, न तत्र कस्यचिद् वैमत्यम्।

**मनुष्येण वर्तमानजीवने स्वर्गमोक्षौ लब्धुं शक्येते न वा ?**—यत्ने कृते सति किमप्यसाध्यं मनुष्यस्य नास्ति तदीयसामर्थ्यपरिधौ। अतः स्वर्गो लौकिकसुखविशेषप्राप्तिः, मोक्षश्च जीवन्मुक्तानां योगिनां, शास्त्रेषु यथा प्रतिपाद्येते, लब्धुं शक्येते यस्मिन् कस्मिन्नपि जीवने विदुषा तपस्विना योगिना जनेन, नात्र कश्चन सन्देहलेशावसरः। अतो वैदिकयज्ञादिसत्कर्मानुष्ठानार्थं यथेच्छं स्वर्ग मोक्षं वाऽधिगन्तुं यत्नो विधेय सुधीभिरिति शमोऽम्।

———

प्राध्यापक, संस्कृत विभाग,
**कुमायूँ विश्वविद्यालयपरिसर, अलमोड़ा।**

डॉ० सत्यकाम वर्मा

# संस्कृत के मानकीकरण में संस्कृत वैयाकरणों का योगदान

आरम्भिक :

प्रस्तुत मूल विषय पर बढ़ने से पहले हमें किसी भी भाषा और उसके व्याकरण के पारस्परिक सम्बन्ध पर विचार कर लेना चाहिये । इस सम्बन्ध में सर्वप्रथम अवधेय तथ्य यह है कि भाषा का आविर्भाव जीवन निर्वाह की सुविधा के लिये जन-मानस द्वारा किया जाता है । वक्ता जिस भी अभिव्यक्ति को दूसरे तक पहुँचाना चाहता है, उसके लिये शब्दानुसन्धान के प्रयास में बढ़ते ही वह एक भाषारूप को जन्म देता है, जो धीरे धीरे स्थिरता प्राप्त करता जाता है । भाषा को ऐसी स्थिरता तब प्राप्त होती है जब उस व्यक्ति के चारों ओर का समाज उन्हीं भाषा-प्रयोगों को अपना लेता है । तब ये ही भाषारूप एक व्यापकतर जन-प्रयोग का माध्यम बन कर धीरे धीरे भाषा-विकास के विविध चरणों—बोली, विभाषा, आदि—को पार करते हुये एक दिन व्यापक जनभाषा का रूप धारण कर लेते हैं । अतः भाषा के विकास एवं स्थिरीकरण को एक स्वाभाविक प्रक्रिया के रूप में कहा जा सकता है, जिसके आरम्भिक नियम विधान प्रयोक्ताओं के आपसी व्यवहार द्वारा तय होते हैं ।

कालक्रम में बढ़ती हुई यही भाषा बदलते प्रयोक्ताओं की बहुविध प्रकृति के अनुकूल विविध दिशाओं में विविध रूपान्तरों को ग्रहण करती हुई बढ़ने लगती है । फिर इसके व्यापक प्रदेश-विस्तार के साथ-साथ भी इसमें रूपान्तरों की संख्या बढ़ती जाती है । ये रूपान्तर आरम्भ में प्रादेशिक प्रयोगों के रूप में स्वीकृति पाते हैं । पर बाद में इन्हें 'रूपान्तर' मानकर सार्वत्रिक रूप में प्रयोग किया जाने लगता है । भाषा की इस व्यापक से व्यापकतर होने वाली प्रगति का परिचय हमें साहित्य या लेखन में प्रयुक्त होने वाले भाषारूप से मिलता है । इस प्रयोग में प्रादेशिक भेद भी स्पष्ट हो जाते हैं और धीरे धीरे उन्हें इतर प्रदेशों में मिलने वाली मान्यता भी । इसी क्रम में बढ़ते हुये एक समय ऐसा आता है जब एक ही मूल शब्दरूप के अनेक प्रयोग-रूप साहित्यकारों, कवियों, या लेखकों द्वारा प्रयुक्त होने लगते हैं ।

इसप्रकार के प्रयोगों की बहुरूपिता बढ़ जाने पर ही यह समस्या उत्पन्न होती है कि उसे किसप्रकार सीमित या समरूपित किया जाये । इसके लिये भाषा एवं शब्दरूपों की प्रकृति का अध्ययन आवश्यक हो जाता है । ऐसे अध्ययन के द्वारा ही यह स्पष्ट हो पाता है कि किसी प्रदेशविशेष के लोग अपने भाषा-प्रयोग या शब्दप्रयोग में किन नियमों का अनुसरण कर रहे होते हैं । इन नियमों की खोज एवं उन्हें क्रमबद्ध करना ही व्याकरण कहलाता है । इन नियमों के एक बार क्रमबद्ध हो जाने के बाद भाषा का आगामी विकास इन्हीं नियमों के आधार पर नियमित होने लगता है । भाषा के सर्वव्यवहृत रूपों में समरूपता लाने के इस प्रयास को ही मानकीकरण कह सकते हैं, क्योंकि अब भाषा के स्वाभाविक विकास को जनमानस के अनुकूल बढ़ने की पूरी स्वतन्त्रता न देकर उसे एक विशिष्ट नियम विधान या समीकरण की एक विशिष्ट प्रक्रिया—का भी ध्यान रखना है । परिणामतः जनप्रचलित होने पर भी ऐसे अनेक प्रयोग व्यापक प्रचलन में आने से इसलिये रह जाते हैं कि उन्हें व्याकरणात्मक मान्यता न मिलने से उनका व्यापक रूप में लिखित या मौखिक प्रयोग नहीं हो सका । प्रयोगों के इसी स्वीकरण एवं अस्वीकरण की प्रक्रिया को, 'मानकीकरण' कहा जाता है ।

संस्कृत के ज्ञात आरम्भिक रूप—वैदिक रूप से लेकर पर्याप्त परवर्ती 'संस्कृत' रूप तक इसी

प्रकार के मानकीकरण की एक नियमित प्रक्रिया के दर्शन होते हैं। और इस मानकीकरण का मूलाधार रहा है संस्कृत के युगानुरूप प्रवर्धमान व्याकरण पर। हम इस लघु निबन्ध में इसी तथ्य की ओर संकेत करेंगे।

**वैदिक भाषा की प्रकृति :**

हमने ऊपर जिस भाषा प्रयोगों के नियमन की प्रक्रिया एवं उसके मूल हेतु का वर्णन किया है वेदों में प्रयुक्त भाषारूप पर वह बात पूरी तरह लागू होती है। वैदिक भाषा में संज्ञा, कृदन्त, तद्धित एवं क्रियारूपों में इतनी विविधता दृष्टिगोचर होती है—और अनेक बार यह विविधता एक ही ऋचा या मन्त्र में हुये विधि प्रयोगों के बीच लक्षित होती है -- कि इससे एक बार तो यह विश्वास होने लगता है कि जैसे वैदिक भाषा में कोई व्याकरणात्मक नियमविधान ही नहीं था। यहाँ यह स्पष्ट कर देना अधिक आवश्यक है कि व्याकरणात्मक नियम विधान किसी एक व्यक्ति या समाज द्वारा निश्चित किये गये कुछ नियमविधान नहीं हैं, बल्कि वे तो सामान्यजन द्वारा स्वतः स्वीकृत वे नियम हैं जिन्हें स्वतःसिद्ध मानकर वह भाषा में नये प्रयोगों एवं व्यवहारों के सृजन में प्रवृत्त होती है। इन्हीं अन्तर्वर्ती एवं अन्तर्हित नियमों के परिचालनस्वरूप जनमानस नये नये शब्दरूपों को प्रयोग करता है। वैदिक भाषा में अनिय-मितता घोषित करने से पहले हमें इस तथ्य को जान लेना आवश्यक है कि वे सभी रूप एक ही प्रदेश या समाज में व्यवहृत नहीं कहे जा सकते। हाँ, विविध प्रादेशिक जनों या कवियों के मिलने पर उनके विविध प्रयोगों का ज्ञान एक दूसरे को होना स्वाभाविक ही था। इसलिये एक ही मन्त्र में यदि 'पूर्वेभिः' और 'नूतनैः' जैसे दोनों प्रयोग मिलते हैं, या फिर 'कर्णेभिः' 'स्थिरैः' और 'अक्षभिः' का प्रयोग एक ही मन्त्र में मिलता है, तो इसका अर्थ भाषा की अनियमितता नहीं, बल्कि विविध प्रादेशिक व्यवहारों की व्यापक रूप में साहित्यिक मान्यता है। क्योंकि कवि या साहित्यकार किसी भी प्रयोग को करने से पूर्व उसकी जन-संम्प्रेषणीयता की व्यापक मान्यता को ध्यान में रखता है। अतः यदि 'कर्णेभिः' और 'कर्णैः' तथा 'तन्वः' और 'तनूः' जैसे प्रयोग एकत्र मिलते हैं, तो उसका अर्थ यही है कि विविध प्रदेशों में जन्म लेने पर भी ये शब्दरूप सामान्यजनों में भी एक समान रूप से ही समझे जाते थे, भले ही उनका प्रयोग प्रादेशिक आधार पर ही अधिक होता होगा। पर कवि अपनी सुविधा के अनुसार शब्दचयन में स्वतन्त्र होने के कारण विशिष्ट स्थल के अनुकूल ही क्योंकि शब्दचयन करता है, अतः वह उन दोनों शब्दरूपों का प्रयोग करने में तब तक स्वतन्त्र है, जब तक या तो व्याकरण द्वारा उन रूपों कामानकीकरण न हो गया हो, या फिर कवि व्याकरण की परवाह न करके भी अपने वक्तव्य को पूरी तरह जनमानस तक पहुँचाना चाहता हो। 'पूर्वेभिः'और "पूर्वैः" के दो विविध प्रयोगों के चयन में वैदिक कवि के सामने सबमे प्रमुख समस्या छन्दोबन्धन की होती है। प्रथम शब्दप्रयोग तीन वर्णों का है, द्वितीय दो वर्णों का। अतः वर्णसन्तुलन की दृष्टि से कवि को इनमें एक या दूसरा—अथवा दोनों ही—प्रयोग चुनाना होता है। यही कारण है कि क्रियारूपों तक में न तो गणों की परवर्ती सीमाओं का ध्यान रखा गया प्रतीत होता है और न ही लकार एवं भावदशा आदि का ही। यहाँ तक कि तिङन्त प्रत्ययों का प्रयोग भी मनमाने ढंग से हुआ लगता है। इस सम्बन्ध में भी तथ्य पूर्व प्रोक्त ही है। 'अथ', 'अह', 'अधा', आदि एक ही शब्दमूल के अनेक रूपों की स्वीकृति एवं प्रयोग का भी यही कारण रहा है, कवि की अल्पज्ञता नहीं।

**वैदिक व्याकरण का स्वरूप**

परन्तु धीरे-धीरे वेदों की व्याख्या के प्रयास में एक विशाल साहित्य का सृजन होने लगा, जो पद्य के अतिरिक्त गद्य में भी लिखा जा रहा था। कवि की यह स्वतन्त्रता वहाँ धीरे-धीरे कम होने लगी। साथ ही कालान्तर के साथ-साथ नये-नये शब्दरूपों का प्रचलन भी होने लगा। धीरे धीरे शब्द-

रूपों, सन्धिनियमों समासयोजना, आदि में इतना अन्तर आने लगा कि वेदों के मन्त्रों को यथावत् स्वरूप में बचाये रखना असम्भव दीखने लगा। आरम्भ में वैदिक व्याकरण के विकास का यही कारण एवं आधारभूत हेतु था। उसमें भावी शब्दरचना के लिये किन्हीं नियमों को निश्चित करने की व्यग्रतायें नहीं थी। उसका एकमात्र उद्देश्य था वेदों में पहले से प्रयुक्त भाषारूप को एवं छन्दों में अन्तर्हित सन्धि नियमादि को यथावत् सुरक्षित रखा जा सके। 'प्रातिशाख्यों' में इसीलिये प्रकृति-प्रत्ययादि विभाजन जैसी किसी परवर्ती कल्पना को स्थान नहीं मिला है। उनका सारा ध्यान शुद्ध उच्चारण, सन्धिनियम, समास-योजना (अवग्रहप्रयोगादि), स्वरांकन, पदपाठ, क्रमपाठ आदि पर ही रहा।

किन्तु इसके समानान्तर ही कुछ ऐसे वैयाकरण एवं निरुक्तकार भी जिन्होंने लोकप्रयुक्त भाषारूपों एवं शब्दरूपों के पीछे कार्य करने वाले नियमविधानों को खोज निकालने एवं भावी विकास को नियमित करने का प्रयास किया। इसे हम तत्कालीन लौकिक व्याकरण की संज्ञा दे सकते हैं। यद्यपि इस व्याकरण का अधिकांश भाग आज अनुपलब्ध है, किन्तु प्रत्यक्ष-अप्रत्यक्ष प्रमाण एवं मान्यतायें इतनी मिल जाती हैं, तथा वैयाकरणों की संख्या का प्रत्यक्ष-अप्रत्यक्ष उल्लेख इतना अधिक मिल जाता है कि तत्कालीन व्याकरण के स्वरूप का सहज ही अनुमान लगाया जा सकता है। इसप्रकार के परिशीलन से ही यह बात सामने आई है कि पाणिनि से बहुत पहले बनने वाले इस व्याकरण में प्रकृति-प्रत्यय के विभाजन के सिद्धान्त स्थिर हो चुके थे। इस खोज का सर्वप्रधान कारण यह था कि जिस भाषा के लिये यह जिज्ञासा जागी थी, वह जनप्रयोग की भाषा होने के कारण नित्य ही प्रवर्धमान थी, न कि वैदिक की भाँति किसी एक निश्चित सीमा पर आकर रुकी हुई भाषा। भाषा का यह नियम है कि पुराने प्रयुक्त शब्दों की आधारभूमिका पर ही नये शब्दों का निर्माण उनसे मिलते जुलते रूप में होता है। यह नव निर्माण सही ढंग से हो, इसके लिये आवश्यक है कि सामान्य प्रयोक्ता भी भाषा की अन्तःरचना की प्रक्रिया से अभिज्ञ हो। इसी अन्तःरचना के विश्लेषण को प्रकृति—प्रत्यय विभाजन के रूप में जानने का प्रयास किया गया। क्योंकि अब प्रश्न केवल पूर्व-प्रयुक्त शब्दों के रूप संरक्षण का ही नहीं था, अब तो प्रश्न था कि भाषा में नये प्रयुक्त होने वाले शब्द मनमाने ढंग से न घड़े जायें।

इसका स्वाभाविक परिणाम यह भी हुआ कि वैदिक भाषा के जो भी रूप लोकभाषा में व्यवहृत होते रहे उनके भी पुनर्वर्गीकरण एवं समीकरण की छानबीन की गई। जो शब्द जनभाषा में प्रयुक्त नहीं हुये, उन्हे तो 'छान्दस' प्रयोग कहकर 'बहुलं छन्दसि' जैसे सूत्रों के द्वारा उन्हें अविवेच्य ठहरा दिया गया, क्योंकि अब उनका अनुकरण नई शब्द रचना के लिये नहीं होना था। बाकी शब्दों को सामान्य जनप्रयुक्त शब्दों की भाँति ही विवेच्य ठहराया गया। परिणाम यह कि जो भी व्याकरणात्मक धारणायें जनप्रयुक्त भाषा एवं शब्दों के विषय में बनी, उन्हें ही वेद में प्रयुक्त शब्दों के विषय में भी लागू किया गया। वेद में भले ही लकार और भावदशा की कल्पना उतनी तीव्र न रही हो, अब उसे बिलकुल विविक्त बना दिया गया। लुङ्, लङ्, लिट्, एवं लृङ् आदि के बीच अब विभेदक रेखा अधिक स्पष्ट हो गई। यही बात वचन, विभक्ति, कारक, प्रत्ययलोप आदि के विषय में भी हुई। सबसे बड़ा प्रभाव नाम और आख्यात के विषय में इसका यह पड़ा कि उनके प्रत्यय और गणों के विषय में एक स्थिर विभाजक रेखा खींचने का प्रयास किया गया। इसप्रकार सामान्य जन के कवि की सी स्वतन्त्रता से वंचित कर दिया गया। अब 'भरामहे' और 'भरामसि' उभयविध प्रयोग की स्वतन्त्रता न रही। सच तो यह है कि 'वसि' और 'मसि' प्रत्ययों का लोप ही हो गया और केवल 'वहि'—'महि' प्रत्ययों से ही काम लिया जाने

लगा। इसी प्रकार के अनेकानेक परिवर्तन उपसर्ग, निपात आदि के प्रसंग में भी हुये। 'उपसर्गों का प्रयोग क्रिया से अविच्छिन्न रह कर हो'—यह धारणा बाद में जनमी। किन्तु वैदिक भाषा में उपसर्गों की स्थिति को व्याकरणात्मक दृष्टि से इसप्रकार कहा जा सकता है : 'उपसर्ग का सम्बन्ध अर्थ की दृष्टि से क्रिया से अविच्छिन्न रह कर ही किया जाता है, भले ही उनका प्रयोग क्रियापद से विच्छिन्न रह कर हो या अविच्छिन्न रहकर।'

**वैयाकरणों का योगदान :**

निस्संदेह इसप्रकार की समरूपता या एकरूपता को लाने के प्रयास में व्याकरण ने सर्वाधिक महत्वपूर्ण भूमिका निभाई। व्याकरण की यह प्रवृत्ति पाणिनि से बहुत पूर्व ही आरम्भ हो गई थी। यहाँ यह अवधेय है कि यद्यपि प्रातिशाख्यों का आविर्भात्र वेदों के पाठ की रक्षा एवं अर्थांकन में सहायता देने के लिये हुआ था, इस समानान्तर लौकिक व्याकरण का विकास किसी साहित्यिक भाषा को दृष्टि में रखकर नहीं हुआ था, बल्कि उसका जन्म लोक में प्रयुक्त शब्दावली में समरूपता लाने की दृष्टि से हुआ था। यही कारण है कि उसके नियम-विधान केवल किसी पूर्वनिश्चित एवं परम्पराप्रयुक्त शब्दावली की रूप रचना के विश्लेषण के लिये ही नहीं हैं, बल्कि उनके आधार पर कभी भी किसी भी आवश्यकता विशेष को ध्यान में रखकर नई से नई शब्दावली का निर्माण किया जा सकता है। संस्कृत व्याकरण का यह प्रजनक रूप उसे अन्य किसी भी रूपविश्लेषक व्याकरण से भिन्न सिद्ध कर देता है। और इसका एकमात्र कारण यह है कि इस लौकिक व्याकरण का जन्म प्रातिशाख्यों की भाँति किन्हीं ग्रन्थों की भाषा के विश्लेषण एवं संरक्षणविशेष के लिये न होकर जनप्रयुक्त भाषा के रूपविश्लेषण के लिये हुआ, ताकि आने वाली पीढ़ियाँ पुरानी परम्परा में चलती हुई नई से नई आवश्यकता के अनुकूल नवीनतर शब्दावली एवं वाक्यचनादि का आविष्कार एवं प्रयोग कर सकें।

**शाकटायन :**

संस्कृत व्याकरण को इसप्रकार की दिशा देने वाले वैयाकरणों में सर्वप्रमुख नाम शाकटायन का आता है। स्वयं पतंजलि ने उनके इस युगान्तरकारी महत्व की चर्चा अपने एक उदाहरणात्म कवाक्य के द्वारा की है, जिसमें उन्होंने कहा है—'आते हुये युग के कारणों को शाकटायन अपनी जगह पर बैठे-बैठे ही देखता रहा और उसके साथ न चल सका।' यही कारण था कि उसका उपहास उड़ाने के प्रयास में समकालीन और परवर्ती कुछ वैयाकरणों ने उसे 'शाकटायन' न कह कर 'शकट का बेटा' कहने का साहस किया। किसी भी युगान्तरकारी व्यक्तित्व को ऐसे उपहास सहने ही पड़ते हैं। और इस उपहास के कारण थे वे कुछ सिद्धान्त जिनकी घोषणा शाकटायन ने बहुत आरम्भ में ही कर दी थी। 'उपसर्गों की अर्थवत्ता क्रियापद से असम्बद्ध रहकर नहीं होती'—उनके इस सिद्धान्त का भी विरोध उनके समकालीन वैयाकरण गार्ग्य आदि ने किया। 'कुछ पदों की रचना मूलभूत अनेक पदों के विविध अंशों को लेकर हो सकती है'—'सत्य'—'अग्नि', आदि शब्दों के उदाहरण के द्वारा शाकटायन ने इस सिद्धान्त को आज से कई सहस्र वर्ष पूर्व सिद्ध करना चाहा था। बाद में भर्तृहरि जैसे महावैयाकरण एवं भाषाविद् ने इस सिद्धान्त की सम्पुष्टि की, और आज के भाषाविज्ञान में तो यह सिद्धान्त सर्व-प्रमुख स्थान रखता है। किन्तु शाकटायन को उनके जिस सिद्धान्त ने अमर कर दिया और जिसके कारण उनके युग-साथी उन्हें पागल तक समझ बैठे थे, वह था : 'सभी नामशब्द किसी न किसी अर्थमूल या धातु से उत्पन्न होते हैं।' प्रत्येक शब्द में आख्यातांश या धात्वंश की यह खोज ही बाद में प्रकृति-प्रत्यय पर आश्रित संस्कृत व्याकरण की रूपविश्लेशण प्रक्रिया का मूलाधार बनी। यास्क से पहले ही यह धारणा

इतनी दृढ़ हो चुकी थी और शाकटायन ने ही इसे इतना सम्पुष्ट कर दिया था कि बाद में व्याकरण में जो 'उणादिसूत्रों' के रूप में अज्ञातमूलक शब्दों के विश्लेषण का प्रयास हुआ, उसका जनक भी शाकटायन को ही घोषित कर दिया गया। इसप्रकार किसी भी मूल से आये किसी भाषा विशेष में प्रचलित किसी भी शब्द का रूपात्मक विश्लेषण उसी भाषा के अन्य शब्दों की भाँति किये जाने की परम्परा शाकटायन से ही आरम्भ हुई। इस प्रक्रिया में स गुजरने के बाद ही उन शब्दों को भी बाद में भाषा के सामान्य व्याकरण की प्रक्रिया में से गुजरना पड़ा। आत्मसात्करण एवं समीकरण की यह प्रक्रिया बाद में भाषारूपों और शब्दरूपों के मानकीकरण की आधारभूमि सिद्ध हुई।

**यास्क :**

यास्क यद्यपि वैयाकरण नहीं कहे जा सकते, तथापि उनके निरुक्त से यह बात स्पष्ट होती है कि उनसे बहुत पूर्व ही धातुओं आदि के सर्वव्यवहृत रूपों के चयन की प्रक्रिया आरम्भ हो चुकी थी। सभी प्रदेशों में प्रयुक्त सभी धातुयें एवं सभी शब्दरूप समान रूप में व्यापक जन-भाषा में व्यवहृत नहीं हुये थे। 'शवति' और 'शव' के उदाहरण देकर उन्होंने सिद्ध किया है कि किसप्रकार 'शव' धातु का प्रयोग एक प्रदेश-विशेष में ही आख्यात के रूप में होता है, जबकि अन्यत्र उसका प्रयोग नाम शब्द की तरह किसी भिन्न अर्थ में—किन्तु मूलतः सम्बद्ध अर्थ में ही—होता है। यहाँ वह इस बात को स्पष्ट करते हैं कि 'शव' शब्द का नामवाचक प्रयोग ही उसका सर्वस्वीकृत रूप है, आख्यातात्मक रूप नहीं। अतः यह स्पष्ट है कि व्याकरण या निरुक्त का काम मानवीकरण नहीं है, वह तो जन-प्रयोग द्वारा स्वतः ही होता चलता है। व्याकरण तो केवल मानकीकृत रूपों का विश्लेषण करके, उस मानकीकरण के पीछे काम करने वाली धारणाओं या विश्लेषणप्रक्रिया को स्पष्टमात्र करता है।

**पाणिनि :**

इस दिशा में सर्वाधिक व्यापक, पूर्णतम एवं सुगठिततम प्रयास पाणिनि ने किया। उसकी अष्टाध्यायी में एक ओर जहाँ यास्कप्रोक्त स्पष्टतः उपलब्ध प्रकृति-प्रत्यय-विभाग को आधार रूप में स्वीकार किया गया, वहाँ शाकटायन के मत का पूर्ण अनुकरण करते हुये देशजादि शब्दों में भी उणादि-सूत्रों एवं निपातन सूत्रों के माध्यम से किसी न किसी धातु को स्थिर करने एवं उन्हें भी निश्चित प्रत्ययों से निर्मित सिद्ध किया गया है। कारण यही है कि उस महावैयाकरण की दृष्टि में जनमानस की भावी प्रक्रिया को केवल इसीप्रकार नियन्त्रित किया जा सकता है। क्योंकि किसी भी कारण जब एक बार एक शब्दराशि भाषा में स्वीकृत हो जाती है, तब उसके अनुकरण पर अन्य भी शब्दराशि का निर्माण होने लगता है। अतः उसे वैधता देने से भावी शब्दों के विकास का नया मानदण्ड स्थापित हो जाता है।

इसप्रकार के मानदण्डों को स्थिर करने में पाणिनि सर्वाग्रणी इसलिये रहे हैं कि उन्होंने इस प्रक्रिया को भाषा के हर शब्दरूप एवं वाक्यरूप आदि पर घटित करने का प्रयास किया।

**परवर्ती वैयाकरण :**

पाणिनि के बाद आने वाले वैयाकरणों ने नियम विधान की दृष्टि से अधिकांशतः उनका ही अनुकरण किया है। किन्तु कात्यायन ने उनके लिये अपने वार्तिकों की रचना करके एक नई दिशा भी उद्घाटित कर दी। पाणिनि के सूत्रों से अवशिष्ट एवं उसके बाद आविर्भाव में आई शब्दावली को कात्यायन ने पाणिनि की ही मूल प्रवृत्ति के अनुसार विश्लेषित करने का महान् प्रयास किया। देशज या बाह्य ऐसी शब्दराशि को केवल 'अपभ्रंश' या 'अपशब्द' कहकर छोड़ा नहीं जा सकता था। पतञ्जलि ने कात्यायन से प्रेरणा लेकर ही ऐसी सभी 'अपशब्दराशि' को साधु शब्दों के समतुल्य मूल की ठहराने का

प्रयास किया । इसप्रकार नये से नये शब्दों का अन्तर्भाव पुराने नियमों के अन्तर्गत अथवा नये नियमों के अधीन किया गया ।

भोज, शर्ववर्मा, अनुभूतिस्वरूपाचार्य, हेमचन्द्र, चन्द्राचार्य आदि सभी वैयाकरणों ने इस परम्परा का निर्वाह किया और तदर्थ नये-नये नियमों का विधान किया। उन सबका उद्देश्य यह था कि नये आने वाले शब्दों को भी एक मानदण्ड के रूप में स्वीकार कर लिया जाए । उनके इस प्रयास में उन्हें नये-नये प्रत्ययों एवं कभी-कभी नई-नई धातुओं की भी कल्पना करनी पड़ी । इस सबका उद्देश्य यही था कि भाषा के सामान्य व्यवहृत रूप के दायरे में जो भी शब्दरूप सर्वस्वीकृत रूप में व्यवहृत होने आरम्भ हो गये थे, उन्हें एक मानदण्ड देकर अनुकरणीय स्वीकार कर लिया जाये, ताकि नये शब्दों के निर्माण में चल रही अवांछित स्वच्छन्दता को किसी अंश तक सीमित किया जा सके । क्योंकि इसप्रकार के स्वीकृत नए मानदण्ड से थोड़ा सा भी विचलन होने पर उसे 'मानक' के रूप में स्वीकृत नहीं किया जा सकता था । 'मानक' का रूप तो उस शब्द को तभी मिलता था, जब व्याकरण के मानों के रहते भी उस शब्द-विशेष और उसके आधार पर व्यवहृत होने वाली अन्य शब्दराशि को सार्वत्रिक मान्यता मिल जाती थी और साहित्यादि में उसका प्रयोग होने लगता था।

**कतिपय उदाहरण:**

हमने ऊपर निरुक्त से 'शव' और 'शवति' के शब्दयुगल के रूप में एक उदाहरण प्रस्तुत किया है । हम यहाँ कतिपय अन्य उदाहरण देकर अपने वक्तव्य को स्पष्ट करना चाहेंगे ।

वेद में 'मृद'-'ऋदु', 'ऋषभ-वृषभ', 'ऋत-घृत', 'अथ-अध-अघ-अह', 'सोम-होम', 'सुत-हुत', 'सवन-हवन' आदि शब्दयुग्मों का प्रायः समानार्थ रूप में ही एक दूसरे के व्यत्यय में प्रयोग होता है । किन्तु परवर्ती समय में इनमें से केवल 'मृदु', 'वृषभ', 'ऋत', 'अथ', 'होम', 'हुत', 'हवन' आदि का ही प्रयोग उस सामान्य अर्थ में सीमित रह गया । शेष शब्द या तो व्यवहार से बाह्य हो गये, या फिर उनका अन्य पूर्व प्रचलित या नवीन अर्थों में परिसीमन हो गया । व्याकरण ने इस पर धात्वर्थ एवं प्रत्यय-प्रयोग की दृष्टि से औचित्य की मुहर लगा दी । मानकीकरण की इस प्रक्रिया के इसप्रकार के सहस्रों उदाहरण दिये जा सकते हैं । यही बात क्रियारूपों एवं लकारगत भेदों के सम्बन्ध में भी है । हम गणों के विषय में संकेत पहले कर आये हैं । कृ, श्रु, हु, सु आदि अनेकानेक धातुओं का प्रयोग वेद में प्रायः एकाधिक गणों में सामान्यतः ही पाया जाता है, किन्तु पाणिनि एवं परवर्ती वैयाकरणों ने ऐसी अधिकांश धातुओं का प्रयोग प्रायः एक ही गण में सीमित कर दिया । यही कारण है कि वैदिकेतर साहित्य जब इन धातुओं के इसप्रकार के व्याकरणेतर समझे जाने वाले प्रयोग मिलते हैं, तब हम उन्हें अपाणिनीय या व्याकरण-विरुद्ध कह देते हैं । वस्तुतः अन्तर केवल इतना ही आया है कि पहले वे वेद की भाषा की दृष्टि से मानक या आदर्श प्रयोग थे, जबकि अब वे जन-प्रयोग से सामान्यतः वहिष्कृत हो जाने के कारण अमानक या अमान्य प्रयोग बन गये हैं ।

यही बात यास्क से पाणिनि तक के कालान्तर में घटती दीखती है । यास्क से पहले भी ब्राह्मणों से उपनिषद् तक के कालान्तर में भी यही प्रक्रिया घटित हुई थी । और पाणिनि के बाद कात्यायनादि के समय तक की बात तो कह ही आये हैं । उनके उदाहरण देने से बात बहुत लम्बी हो जायेगी ।

**उपसंहार:**

अतः उपसंहार के रूप में हम यही बात फिर से कहना अधिक उचित समझते हैं कि संस्कृत के वैयाकरणों ने आरम्भिक काल से ही जन-भाषा को अपने आदर्श या विवेच्य के रूप में सामने रखा है

और उनकी दृष्टि सदा इसी बात पर रही है कि सामान्य जन जिस भी शब्दरूप को अपने व्यवहार में अधिकाधिक प्रयुक्त करते हैं उसे ही वे आदर्श या मानक रूप में घोषित कर देते हैं। वस्तुतः मानकीकरण शब्द का अर्थ है 'पहले अमानक के रूप में व्यवहृत रूप या प्रयोग को मानक का रूप दे देना।' यथा कभी जिस अर्थ में चतुर्थी और षष्ठी दोनों विभक्तियों का प्रयोग एक ही आधार पर होता था, उसमें एक (यथा 'चतुर्थी') को ही उस प्रयोग के लिये निश्चित कर देना। इसप्रकार कभी मानक जाने माने वाला प्रयोग 'रामस्य देहि' कालान्तर में अमान्य अतएव अमानक मान लिया जाता है, जब कि चतुर्थी प्रयोग 'रामाय देहि' को ऐकान्तिक मानक के रूप में स्वीकार कर लिया जाता है। व्याकरण इसे 'सम्बन्ध' और 'सम्प्रदान' की परिभाषाओं के अन्तर के द्वारा विभिन्न कोटियों की सीमाओं में बाँध कर विविध रूप में मानकीकृत कर देता है।

संस्कृत शब्दावली एवं वाक्यरचना के मानक युगानुरूप बदलते रहे हैं और उस-उस काल में बनने वाला व्याकरण उन्हें ऐसी मान्यता देने में सदा अग्रणी रहा है।

---

**प्रोफेसर–संस्कृत विभाग,**

**दिल्ली विश्वविद्यालय, दिल्ली।**

☐ Dr. Avanindra Kumar

# DENOTATION OF WORD : UNIVERSAL OR PARTICULAR

The problem of the universals has been dealt with in detail in almost all schools of Indian Philosophy. The object of this paper is to see it from the point of view of word and meaning. Almost all words in our language, except proper names are general. Like proper names, they cannot be said to stand for individuals. The main theme, thus, can be framed in this form : what is the meaning of general words ? Different systems of Indian Philosophy answer the question from their respective stand points. The issue is twofold : (i) whether the meaning of general words is universal or particular or both (ii) whether the meaning of general words is anything real.

For the Mimansa and the Avaita the direct meaning of words in only universal, the particular is meant only by implication. For the Nyaya Vaisesika, on the other hand, word denotes a particular qualified by the universal. The Grammarians who have dealt with this problem and have made significant contributions, are divided into two schools; one holding the particular and the other holding the universal as the sole meaning of words. Bhartchari is a great champion of the latter view. He is an absolutist like the Advaitist and holds universals to be empirically real as the meaning of words. Though they are ultimately non-different from word-absolute (Sabdabrahma). It is worth nothing that all these views attach some kind of reality to the meaning of words. But the Buddhist denise that the meaning of words is real of all. The real is indeterminate or unspeakable. He accepts that the meeaing of words is universal, but the universal in his view is a construction of thoughts and hot an element in reality.

The concept of universals and the problems out of it, have been perennial topics of discussion in Western Philosophy also. Plato's theory of Ideas may be considered as a starting point. Plato advocated an extreme of realism. The extreme realism of Plato was rejected by Aristotle, who advocated in its place a moderate form of realism. He agreed that universals were real but denied that they had any being apart from an individual. These two forms of realism, the Platonic and the Aristotelian remained in prolonged discussion on the universal in Western Philosophy. After sometime, during the Medieval period, both the forms of realism were rejected in favour of conceptualism. The modern period also supports conceptualism. Although, nominalistic trend was also present in the thought of Thomas Hobbes, it did not find much favour among the leading philosophers. All the traditional views on the universal in Western Philosophy finally boil-down to two ontological theories, that is the **Philosophy of universals** and the **Philosophy of Resemblances.**

In the following lines, I shall examine the various views of the Sanskrit Grammarians on the Universal.

## DENOTATION OF WORDS

The primary function of words is to provide means for communication of ideas and thoughts. It is due to the presence of general words in our language that extension of thought beyond the immediately here and now becoms possible. It is, therefore, of primary importance to ask : what do these general words stand for ? What, indeed, is the part of language in our cognitions ? Are words adequate expressions of reality ? Indian Philosophy provides the answers to these questions in varied and conflicting forms. All the system of Indian Philosophy make significant contributions to this question.

## PANINI

In the very first chapter (Ahnika) of the Mahabhasya, Patanjali has raised the issue whether the word denotes universal or particular. The import of all the words cow etc. is **cow universal** or **cow particular.** Patanjali has referred[1] to Panini's opinion that the later considered the two as the import of a word. From the view of universal, Panini framed the aphorism—जात्याख्यामेकस्मिन्० (अष्टा० 1.1.58) and from the view of particular सरूपाणामेकशेष० (अष्टा० 1.2.64).

"किं पुनराकृतिः पदार्थः आहोस्विद् द्रव्यम् ? उभयमित्याह । उभयथा ह्याचार्येण सूत्राणि पठितानि ।

Kaiyata, while explaining these lines has clarified the two sides. Kaiyata says[2] that if one of the two is accepted as solely true then the applicability of the grammatical principles will lead to confusion, and that is why Panini considers the two as import of words. According to the theory which holds universals to be the meaning of words...words such as cow...indicate the entire kind. Particulars are innumerable. It is impossible to have the relationship of everyone. By seeing every particular same sort of knowledge is achieved. It is, therefore, inferred that the Universal is some existence (सत्ता), which is found in different particulars. Cow etc. Words indicate the universal (जाति) which is inherently present (Samavaya relationship) in different elements (पदार्थ). When the cow is known by the word cow; then the particular qualified by the universal is known. Just as words, indicating kind, make us understand a particular qualified by the universal; in the same way—words, indicating quality (गुण) white etc. denote the existence, with Samavaya relationship in the gunas. A guna is known through Gunatvajati. The knowledge of guna in an element (द्रव्य) is attained through continuity (परम्परा). Guna is available in a dravya (द्रव्य); hence by knowing guna, a dravya connected with guna is known. Nouns also denote universal only. A body from birth to death, remains the same although apparently its features change as it grows in age. This oneness denotes the universal (जाति). Even the verbs are expressive of the universal. That is the main denotation

of a root. For example पठति, पठतः, पठन्ति etc. having one पठ् root denote universal as a root cause of oneness. On the contrary, those, who regard particular as the import of a word, say that the word cow means the cow individual or particular. The universal is found in a particular, therefore, the Universal is also known secondarily (गौण रूप से). Therefore, criticism charging this view with indefiniteness (अनन्तता) about the particular, is not valid.

## VAJAPYAYANA (UNIVERSALIST)

Katyayana and Patanjali have specially referred to the opinions c Vajapyayana and Vyadi. Vajapyayana held the view that words denote universal and Vyadi held that words denote particular. Vajapyayana, in support of his stand, has given the following arguments[3] :

A word denotes universal. By saying 'cow', white, blue or yellow quality is not know but the cow general (सामान्य) is know. Even the universal being one, how can we say that the same is known ? On saying a (cow)—a sense of indivisibility (अभिन्न) is denoted, not the white, blue or yellow. By telling of one cow the entire cow is known. By understanding on cow; cows at different places, of different ages and different colours can be recognized. It is, therefore, known that the word cow denotes the cow universal. The actions of Dharmasastra etc enote the meaning of a word as universal only—'A Brahmana should not be killed', 'Alcohol should not be taken'—mean 'No-brahmana should be killed' and 'no-alcohol should be taken'. If the particular be the meaning of a word, then by not killing a Bramana and by not taking a little alcohol, the Dharmasastra would have been obeyed fully.

One thing is available at one time at many places; as one sun is available at many places. The plea is not correct, because one person cannot see the sun at different places at the same time. The universal should be taken like lord 'Indra'. As one 'Indra', called in hundred Yajnas at one and the same time—is present—in the same way universal is also found in different places at one and the same time. If only particular would be taken as import of word, then the universal would not be known The fault in this is—all the elements (द्रव्य) of one word would not be known. In the Sastras, one word is used for its उपाधिस (उपकरणस) ; it shows the import of a word is universal—

अस्ति चैकमनेकाधिकरणस्थं युगपत् । आदित्यः । इतीन्द्रवद्विषयः द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः । चोदनायां चैकस्योपाधिवृत्तेः ।[4]

## VYADI (PARTICULARIST)

Acarya Vyadi, the writer of Samgraha. holds the view that the word does not denote universal but the particular (व्यक्ति). Different genders and numbers would be worthwhile only when the particular is taken as the meaning of a word. The gender would be according to the particular and so the number. Even in commands, an action is taken on a particular not the universal. 'Bring the cow'—on saying so—a particular cow is brought not the unive sal. One Universal cannot

remain at one time in many places just as one Devadatta cannot remain at Agra and Mathura both the places at one time. If the word denotes universal then all the cows woulds be taken as dead on the death of one cow. Every particular has got some difference. On considering the denotation as universal the similarity and dissimilarity—the two contradictory qualities cannot remain together. The विग्रह is made on the idea of dissimilarity of particulars गश्च शोध. Words of different meauings make the one word (एक शेष) representative on the ground of differences (पृथक्ता) of the element; as अक्षा:, पादा:, माषा: one word remains for many.

द्रव्याभिधानं व्याडि: । तथा च लिङ्गवचनसिद्धि: चोदनासु च तस्यारम्भात् । न चैकमनेकाधिकरणस्थं युगवत् । विनाशे प्रादुर्भावे च सर्वं स्यात् । अस्ति च वैरूप्यम् । तथा च विग्रह: व्यर्थेषु च मुक्तसंशयम् ।[5]

## KATYAYANA AND PATANJALI

Katyayana and Patanjali have discussed the opinion of Panini at a number of places and have agreed that the word denotes universal and Particular both. The word (Jati) universal according to Katyayana and Patanjali clarifies the entire problem. They hold the view that a word denoting universal (जातिवाचक शब्द) denotes particular as well as universal. Patanjali cites an example. someone asks a milkman sitting in the midst of a big cowherd. 'Are you looking at some cow ?' The milkman thinks that he is seeing cows with his own eyes and is still asking whether I am looking at some cow. Hence, it is inferred that he means some particular cow.

"जातिशब्देन हि द्रव्याभिधानम् । जातिशब्देन हि द्रव्यमप्यभिधीयते, जातिरपि···नूनमस्य द्रव्यं विवक्षितम् ।[6]

Kaiyata and Nagesa have explained it. According to them sometimes the Universal is supreme and sometimes the particular. That sense is emphasized which is desired by the speaker, which is being denoted more of the Universal or particular-is decided by the intention of the speaker only. When the speaker want universal; the universal is denoted and when he wants particular, particular is denoted.[7] Patanjali[8] has clarified that the Universal and the particular cannot be made separate. The two are inseparable (अभिन्न).

"अव्यतिरेकाद् द्रव्याकृत्यो:"

The controversy between the two groups of Universalists and Particularists has also been sorted out with wisdom by Patanjali. He says, it is not the fact that Universalists do not consider the particular as import of word and vice-versa. Both consider universal and particular both as import of word. The difference is...some consider the main import as universal and others the particular. universalists think universal as the chief import and particular as subsidiary, whereas the particularists consider particular as the main and the universal as the secondary.

न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थो द्रव्यपदार्थिकस्य वा आकृतिर्न पदार्थः । उभयोसभयं पदार्थः । कस्यचित्तु किञ्चित् प्रधानभूतं किञ्चिद् गुणभूतम् । आकृतिपदार्थिकस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम् । द्रव्यपदार्थिकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता ।[9]

के रूप में साफल्य-मोक्ष का खुला द्वार है, युग धर्म—स्वदेश प्रेम का क्रियात्मक प्रचार है और कर्म-क्षेत्र भारत के गौरव की रक्षा की सिद्धि का द्वार है। 'जनविजयम्' में हृदय-स्पर्शिता और दो टूक बात करने वाली स्पष्टवादिता है, फिर भी —भाषा सरल और सुबोध होते हुये भी, जीती-जागती समर्थ संस्कृत उभरकर आई है परन्तु नेहरूचरितम् की भाषा, पश्चिमा कृति होने के कारण, प्रसाद गुण सम्पन्न, प्राञ्जल एवं परिष्कृत है। काव्य में इतिहास और कल्पना का मणि-काञ्चन संयोग है अतएव भाषा में लालित्य का आ जाना नितान्त नैसर्गिक है।

अनेक नये उपमानों और प्रतीकों का प्रयोग भी आधुनिक महाकाव्यों में खुलकर हुआ है। षड्यन्त्रकारी विषैले, कुत्सित राजनीतिज्ञों के लिये कुछ सर्प का प्रयोग कितना व्यवहार्य है ? पारिजात सौरभम्, पारिजातापहारः, और भारत पारिजातम् (तीनों गान्धीचरित) में भाषण शैली और आत्म-निवेदन शैली पर साधुत्व और संन्यासित्व की छाप एकदम स्पष्ट है और समाधिस्थ मनसा मन की घुटन, कुहासा और आक्रोश के निकालने का ढग—'जनविजयम्' में अपने प्रखर रूप में उजागर है। पत्र और सन्देश शैली का स्वर शिवराज्योदयम्' में मुखर है।

निष्कर्षतः कहा जा सकता है कि संस्कृत के आधुनिक महाकाव्यों में अनेक ऐसी प्रवृत्तियाँ उभर कर समाने आई हैं जिन्हें काल-सापेक्ष और विचार-सापेक्ष दोनों ही दृष्टियों से आधुनिक कहा जा सकता है। जन–सामान्य को अधिक से अधिक महत्त्व देने की बात आज की प्रजातान्त्रिक और समाजवादी जीवन-पद्धतियों के सर्वथा अनुकूल है, जिसका संस्कृत के आधुनिक महाकाव्यों में यथार्थ रूप में चित्रण हुआ है।

'जनविजयम्' 'चीरहरणम्' और 'कौन्तेयम्' प्रभृति कुछ इनी गिनी रचनाओं को छोड़कर इन महाकाव्यों में साहित्य के बदलते प्रतिमानों और आज के ज्ञान-विज्ञान का प्रभाव वैसी द्रुतगति से परिलक्षित नहीं हो रहा है, जिस द्रुत-गति से अन्य आधुनिक भारतीय भाषाओ के—काव्य में तुरत झलक जाता है, शायद इसके पीछे वर्तमान चकाचौंध से दूर रहते हुए अपनी साधु-वृत्ति के सहारे चलने की प्रवृत्ति संस्कृतज्ञों की मनस्थिति में विशेष परिवर्तन नहीं होने दे पा रही हों अथवा आगा-पीछा देखते हुये बहाव में व्यर्थ उखड़ने की अपेक्षा कुछ ठहराव की प्रवृत्ति काम कर रही हो वर्तमान में बदलते प्रतिमा को बौने, वांस का नहन्ना से अधिक न मानने का 'अहम्' आड़े आ रहा हो और यह भी सम्भव है कि साधन और सुविधा की कमी में अपरिचय की मजबूरी, बदलते प्रतिमानों को पचाने, पनपाने में दूरी बनाये हुये हो।

**सन्दर्भ-संकेत—**

१. डॉ० श्रीधर भास्कर वर्णेकर, शिवराज्योदयम्, सर्ग ५ श्लोक सं० ३८.
२- रेवाप्रसाद द्विवेदी सीता चरितम् ।२।२६। ३. वही २–२७।
४. सीताचरितम्—२-३५।। ५. वही ३–८ ।। ६.—४-५७।
७. जनविजयम्—७–१६। ८. जनविजयम्—१.७१, ७२, ७३।
९. रुक्मिणीहरणम्—११=८७, ८८। १०. जनविजयम्—१५–४।
११. जनविजयम्—१५-१३। १२. जनविजयम्—१५-१४।
१३. जनविजयम् ८-४३।। १४. जनविजयम् ८-४४।

———

**अध्यक्ष-संस्कृत विभाग**
**देवनागरी कालिज**
**गुलावठी, बुलन्दशहर।**

□ डॉ० सुभाषो वेदालङ्कारः

# राजस्थान-प्रदेशे नवीनं संस्कृत-साहित्यम्

आदिकवेर्वाल्मीकेरारभ्य संस्कृत-साहित्य-निर्माणस्य या परम्परा चिरात् प्रवर्तिता आ अद्यावधि चापि सततं प्रवर्तते समस्तेऽपि भारतवर्षे । मध्यकाले तावत् साहित्य-मन्दाकिनी मन्दप्रवाहाजायत न चासौ विच्छिन्ना । आंग्लशासनेऽपिप्रभूतं संस्कृत-साहित्यमलेखि विद्वत्तल्लजैः कविवरेण्यैश्च । शतशः रचनाः प्रकाशमुपगताः नैकाश्च विलुप्ताः ।

स्वतन्त्रभारते नवीन-संस्कृत-साहित्य-सर्जने महती प्रवृत्तिः परिलक्ष्यते । राजस्थान-प्रदेशोऽपि तत्र पृष्ठगामी नास्ति । समभूवन्नत्रापि बहवः कविपुङ्गवाः कोविदप्रवराश्च यैः स्वलेखनीभिः सुललितानि कमनीयानि काव्यानि विलिखितानि ।

संस्कृत-साहित्य-निर्माणप्रसङ्गे दृश्यश्रव्यभेदयोः सर्वविधासु सर्वासु च शैलीषु गुम्फितानि गद्य-काव्यानि, पद्यकाव्यानि, नाटकानि कथाश्च विबुधकुलदिनकराणां विविध-शास्त्रपारङ्गतानां पंडितानां कवन कलां वैदुष्यञ्च प्रदर्शयामासुः । गीतिकाव्यानि, मुक्तककाव्यानि, नवीनशैल्याः संस्कृतकविताः, संस्कृत गीतानि, गज्जलिकाश्च सर्वतः सम्मानं लभन्ते ।

नवसाहित्यप्रचारे प्रसारे च लग्नाः संस्कृत-कल्याणी, संस्कृत-भारती, संस्कृत-रत्नाकरः, स्वर-मङ्गलाः प्रभृतयः पत्रिका अपि सततं प्रकाशमुपगताः ।

प्रातः स्मरणीया सर्वविद्यानिधयः भट्टमथुरानाथशास्त्रिणः, राजस्थानस्य कविषु प्रधानं स्थानं दधति । तैः खलु नैककृतिषु नैकशैलीषु अभिनवसंस्कृतसाहित्यस्य परम्परा प्रचालिता । संस्कृत-छन्दोभिः सह हिन्दी-भाषायाः सोरठ-दोहा—घनाक्षरीप्रभृतीनां छन्दसामपि प्रचुरप्रयोगस्तैरकारि । तेषु च संस्कृत-छन्दस्सु, सततं सुरुचिपूर्णं साहित्यं तेषां कल्पनया प्रसूतम् । नैतावदेव अपितु संस्कृत-वाङ्मये नूतनकाव्य सरणि-निर्माणे उर्दूभाषाया अपि छन्दांसि तैरङ्गीकृतानि । उर्दू-गज्जलिकायाः स्वरे सरण्याञ्च शतशः पद्यानि कविताश्च तेऽलिखन् । राजस्थाने संस्कृत-गीति-प्रवर्तका अपि त एव सन्ति ।

'जयपुर-वैभवम्' नाम्ना विख्यातं तेषां सरसं काव्यं जयपुरगौरवं तदितिवृत्तञ्च प्रस्तौति । 'गोविन्द वैभवं', नाम गीतिकाव्यं गीता-प्रेस-गोरखपुरेण प्रकाशितं, यत्र कविः नैकरूपेषु कृष्णस्तुतिञ्चकार । कृष्णस्य रूपमाधुर्यं, वेणुवादनम्, भवसागरतारणसामर्थ्यं, प्रभृति विषयेषु कवेः कविता विलासो दर्शनीयो ननु । अस्मिन् काव्ये बहुशः व्रजभाषाछन्दांसि प्रयुक्तानि, घनाक्षरी-छन्दसि श्रीकृष्णस्वरूपमेवं चित्रितं खलु—

**यमुना वरचारी विपिनविहारी सुरसुखकारी दृशममताम् ।**
**वृन्दावनवासी वेणुविलासी सुकृतविकासी संन्नमताम् ॥**

मङ्गलाचरणं सोरठाछन्दसि विराजते—

**मन्दीभवदरविन्दमिन्दीवर-बन्दीकृतम् ।**
**वन्देमहि गोविन्द-चरण मन्दीकृतम् ॥**

'उद्यान-वीथ्याम्' गलतातीर्थस्य वर्णनं रम्ये सर्वैय्याछन्दसि कवेः नैपुण्यं प्रकट्यति—

परितो गिरिराजिरुदञ्चयते परितोषमिमं मरुता चलता ।
नवनीपसमिद्धसुगन्धवशाऽप्यवनी बहुभाति विरूढलता ॥
अयि मञ्जुलनाथ विभाति मनाक् सरसीकृतसीकरशीतलता ।
गिरिगह्वर गोमुखतो गलर्ता सलिले सुखं कुरुते गलता ॥

गद्य-साहित्यप्रसङ्गे "आदर्श-रमणी" इत्याख्य उपन्यासः प्रशंसनीयो ननु । श्रीमतां भट्टमहोदयानां लेखनव्यसनमासीत्, अतः शतशो विषयेषु तेषां कथाः, निबन्धाः, यात्रावृत्तानि, विविध-गोष्ठी-वस्तु-वृत्तानि च मञ्जुलभाषायां प्रकाशितानि ।

कोविदवर्मा सूर्यनारायण-शास्त्रिणः "श्रीकृष्णदूतम्" नामकं दूतकाव्यं विलिख्य "उद्योग-लहरी" इति काव्यं चक्रुः । उद्योग-महिमानं प्रदर्शयन् कविः भणति, काव्यरचनापि उद्योगं विना न संभवति । तथा च—

अनेक—प्राग्जन्मार्जित-विविध-पुण्योर्ग्चितया
महाशक्त्या तद्वत् सुकविकृत-सत्काव्यपठनात् ।
अमन्दायोगाद्वा विविध-रुचि-लोकानुभवतः
विरच्यं सत्काव्यं भवति किमु नोद्योगविषयः ॥

को नाम जनिमान् पुमान्न वेद स्वनामधन्यानां जयपुरस्थ—महाराज-संस्कृत-महाविद्यलयस्य भूतपूर्वाचार्याणां श्रीमतां गिरिधरशर्माचतुर्वेदि महाभागनां नाम कीतिञ्च । सर्वशास्त्रपारङ्गतेन तेन महा-विदुषा गद्य-पद्य-रथाः नैकरचनाः संस्कृतवाचिगुम्फिताः । तस्य "पुराण-परिजातः" 'प्रमेय-परिजातश्च' चेति कृतिद्वयं सर्वत्र विश्रुतम् । 'गिरिधर-सप्तशती' रुचिरा-प्रसादमयी च गाथा रचना वरीवर्ति । विद्या-सम्पन्नो ननुः गर्वशून्यो भवेदित्युपदिशन् कविः लिलेख यत्—

बहुविद्यागुणगणजो गर्वो धार्मो न सज्जनैः किञ्चित् ।
बहुविद्यागुणमण्डितविद्वद्भिर्नहि वसुन्धरा शून्या ॥

बीकानेर वास्तव्यानाँ विद्वत्प्रवराणां विद्याधरशास्त्रिणां प्रसादगुणालङ्कृता, सरला, सरसा हृद्या सशक्ता शैली तु कस्य न वन्द्या । तेन पंडितकविना "हरनामामृतम्" "विश्वमानवीयम्" चेति महा-काव्यद्वयी कृता । "शिव-स्तुतिः', 'सूर्य-स्तुतिः', 'लीलालहरी' 'विद्याधरनीतिरत्नम्' 'मतिलहरी', आनन्द-मन्दाकिनी, 'विचार लहरी' चेत्यादीनि लघुकाव्यानि लिखितानि । कवेः शैल्याः रुचिकरं मञ्जुलरूपं सर्वत्र प्रस्फुरं प्रतिभाति । हरनामामृतकाव्मे मरुभूमिवर्णने कविः ब्रूते—

ते तुन्दिलाः स्वादुरसाः कलिङ्गाः सा शारदी चञ्चलचन्द्रिका च ।
स्फूर्ति स्फुरन्ती स्फुरगावलीषु क्रमेलकानां गतयश्च तास्ताः ॥
प्रशंसितोऽयं चरकेश्वरेण शरीरविज्ञानविचक्षणेन ।
स्नेहार्द्रभावैकरत्नैर्विशिष्टः शुष्कोऽपिनित्यं सरसः सदेथः ॥
न निन्दनीयो न च शङ्कनीयः मरुप्रदेशोऽकरभूमिरेव ।
यः पांसुलोऽपि प्रयतैश्चरित्रैरपांसुलानां धुरिकीर्तनीयः ॥

कवेः शैलीविलासः दर्शनीयो नन्वत्र—

चिन्तितं साधयेद् धीमान् उद्यमैः कार्यसाधकैः ।
यत् भाव्यं तद् भवत्येव तत्र चिन्ता तु कीदृशी ॥

विद्वत्तल्लजस्यास्य पद्येषु विश्वबन्धुत्वभावनासमलङ्कृतानि पद्यानि गीतानि द्रष्टव्यानि भवन्ति—

**न को देशः स्वदेशो नो बान्धवा न च के भवे।**

**मर्त्या एव वयं सर्वे मातास्माकञ्च भूरियम् ॥**

**अपरं मन्यसे त्वं न परः स परः सखा ।**

**प्रेमार्द्रा यदि दृष्टिस्ते सर्वं प्रेममयं जगत् ॥**

जयपुरनगरवास्तव्यः श्रीहरिशास्त्रि,-महोदयो नैककाव्यैः रचनाभिश्च जनहृदयाह्लादनं विबुधजन रञ्जनञ्च चकार । भक्ति प्रधानकाव्यलेखकेषु तस्य विशिष्टं स्थान खलु । भक्तिरचनासु" 'ललिता-सहस्र-काव्यम्" 'सिद्धिस्तवः' चेति प्रसिद्धे स्तः । प्रथमकृतौ भावत्याः त्रिपुर-सुन्दर्याः विभिन्नरूपाणां रम्यं वर्णनं कुर्वता कविना तत्स्तुतिराचरिता । कवेः तान्त्रिकशक्तेः कवित्वशक्तेश्च चमत्कारः पदे पदे दृष्टिपथं समामाति । प्रथमपद्ये लक्ष्मीं वर्णयन् कवि र्ब्रवीति—

लक्ष्मीः या प्रकटी चकार कलया कल्पादि कालेऽम्बिका ।

स्थित्यै चास्यजगमाामस्य कृपया प्रारात् स्वयं विष्णवे ॥

विश्वोद्भावनकारिणीमपि च यां सर्वाः श्रमन्ति श्रियः ।

श्रीमाता ललिताम्बिका भगवती साऽऽस्तां मम श्रेयसे ॥

नैके निबन्धाः शतशः पद्यानि च विविधविषयेषु प्रकाशं गतानि विदुषोऽस्य । कवेः कवितासु भारत गौरव-द्योतकं स्तवनमपि वरीवर्ति । देशभक्तेः भावनां नैकत्र प्रकटी भवति—यथा च

**जय जय भारतदेश,**

**शुभ्रहिमाद्रिसुभगमस्तकवत् ।**

**हिन्दमहासागर कलकल वत्,**

**तव सुयशस्या विजयपताका ।**

**स्फुरति सदा हे शुभतीर्थेशा ॥ जय जय—**

शास्त्रिमहोदयेन 'आदर्श-जीवनम्' नाम महाकाव्यमपि विनिर्मितम् यत्र प्रसाद गुणोऽङ्गी कृतः तद्यथा—

**निर्हन्ति पापं प्रददाति शान्तिं सत्वं समुदभावयतेऽन्तरा च ।**

**निरस्य दुष्कर्म तनोति शर्म, सतां पवित्रं चरितं सुतीर्थम् ॥**

कवि-लहरी उदर प्रशस्तिः' चेति द्वे रचने चापि विख्याते ननु ।

श्रीमनः रामचन्द्रशास्त्रिणः बहवो निबन्धाः पद्यानि च पत्रपत्रिकानां शोभामवर्धमन् । "श्री हरिभक्तचरितम्" नाम काव्यमपि प्रसिद्धं तन्नाम्ना । यत्र स्वामिहरिभक्तस्य जीवनचरित्रम् वर्णितंमृसु किल । गुरुमहिमा तत्र दृष्टव्योऽस्ति—

**ससार-भोगाद्विरतं प्रशान्तं गोपालसेवानिरतं नितान्तम् ।**

**श्रीमन्त्रराजं सतत जपन्तं वन्दे गुरुं श्रीहरिभक्तदेवम् ॥**

श्रीमता काशिनाथचन्द्रमौलिमहाभागेन अभिनवकाव्यकृतिभः संस्कृतसाहित्यं संवर्धितम् । गजलछन्दसः नूतनरूपेण प्रस्तुतीकरणे तस्य नैपुण्यं प्रशंसनीयं ननु । दिङमात्रं पद्यमेकं विलोकनीयम्—

**ज्ञातः केन त्वदीयो भेदः पारोलब्धः किं भवदीयः ।**

**मग्नाः सर्वे गुणबन्धेषु भवत्पूजा यं सुस्थानमिदं मनोमन्दिरेषु ॥**

तस्य रचनासु "शिवार्जुनीयम्" 'शङ्करदिग्विजयम्' 'राजाम्बरीशम्' 'सत्याग्रहः', "संस्कृत-गीताञ्जलिः" इति प्रसिद्धाः सन्ति।

बुधवरः विश्वनाथः नाटके स्वप्रतिभां दर्शितवान्। "वामन-विजयम्", 'कलिकौतुक" ञ्चेति नाटक द्वयमसौ लिलेख। प्रथम तावत् दशदृश्येषु विभक्तं द्वितीयञ्च नवदृश्येषु। वामनविजये भारतगौर-वगानं कुर्वन् कविः भणति—

बङ्गैः सगीतकीर्तिः कलितकलकश्चोत्कलैरान्ध्रबन्धुः।
मद्रैरुन्निद्रमुद्रो जवजनितजयोद्गुर्जरः सिन्धुबिन्दुः॥
पञ्चापरैरञ्चितश्रीमधुमधुरो मध्यमुक्तैर्विहारैः।
आर्यावर्ताऽभिधानो जयतु जनपरो मानिनां जन्मभूमिः॥

'कविसम्मेलनं' नाम प्रहसनमपि कविरलिखत् पद्यमेकं विलोच्यताम्—

कदा बीकानेरेऽति विमलघड़सी सर तटे।
द्विचकुस्थान् छात्रान् भ्रमणनिरतान् कन्दुकरतान्॥
'कहूँगा' भोः छात्रा उपविशत "ट्रांजिस्टर सुनो"।
कुरुध्वं तत्पश्चात् 'सब मिल' जले कूर्दनकलाम्॥

कोविदशिरोमणयो महामहोपाध्यायाः श्रीमन्तो नवल किशोरकांकराः भारतवर्षे सम्प्रति लब्ध-यशसो विद्यन्ते। गद्य-पद्य-युक्ताः नैककृतयस्तेषां ख्यातिङ्गताः। "यात्राविलास" नाम गद्यकाव्यं तेषां-मद्भुतकवित्वं पाण्डित्यञ्च प्रस्फुटितं करोति। तेषां नैकपुस्तकानि पुरस्कृतानि। अद्यत्वे तैः रचितः 'राष्ट्रवेदो" नाम वेदग्रन्थः सर्वत्र चर्चाविषयो वरीवर्ति। वैदिक-छन्दोभिः लिखितोऽसौ प्रथमो मानवकृतो वेदो वर्वति। स च श्रीमतां कांकराणां वेदेषु गतिं वैदुष्यञ्च प्रस्तोति। स चायं वेदोऽस्मिन् वर्षे पुरस्कृत उत्तरप्रदेशसर्वकारेण

डूंगरपुरनिवासी श्रीमान् गणेशरामः शर्मा राजस्थानस्य सुप्रसिद्धः कथाकारः निबन्धकारश्च वरिवर्ति। तस्य च विदुषः शतशो लेखा निबन्धाश्च संस्कृत-पत्रिकासु प्रकाशिताः।

राजगुरुः गोपीनाथः शास्त्री 'काशी-लहरी' नाम्नीं स्वभावोक्त्यलङ्कारालङ्कृतां कृतिञ्चकार। राजस्थानप्रान्ते व्यंग्य-प्रधानानि काव्यान्यपि विनिर्मितानि। अस्मिन् प्रसङ्गे त्रिवेदिनः श्रीदीनानाथ-शास्त्रिणः नामोल्लेखयोग्य आस्ते। तस्य "परीक्षा-पञ्चदशी" प्रशंसनीया नाम। परीक्षामहिमानं वर्णयन् कविरुवाच—

यस्मिन् युगे देवि, विभो परीक्षे! नूनं त्रिलोकी त्वमनुप्रविष्टा।
विमुच्य मातर्भवतीं शरण्यां ब्रूहि व्रजेयं शरणं कमद्य॥
मातः परीक्षे तव वीक्ष्य कालं चित्रं न यद् बिभ्यति देवि शिष्याः।
इन्द्रादिदेवा बलशालिनोऽपि मुह्यन्ति भीता नितरां विचित्रम्॥
दीनोऽहीनोऽप्यथवा दरिद्रो जनः कथङ्कारमपि स्वदेवात्।
चेदीश्वरि! त्वत् कृपयावलीढः प्राप्नोति लोकं सुपदं स एव॥

अस्यामेव श्रेण्यां कलानाथशास्त्रिणः रचना "केनाणकम्" चापि प्रशंसार्हं ननु।

विद्यानिधिः पट्टाभिरामशास्त्री वाल्मीकिरामायणमाश्रित्य बालानां बोधाय "रामायण-संग्रहः" नामकं ग्रन्थमकरोत् ।

एवमेवान्येऽपि ये विद्वांसो नवीनं साहित्यं कृतवन्तः त इमे सन्ति—श्रीनन्दकिशोरःशास्त्री-श्रीगिरिराजः शास्त्री-पंडितवर्मः नैककथालेखकः वृद्धिचन्द्रः शास्त्री श्रीगंगाधरः द्विवेदी, श्रीहरिगोविन्दः पाराशरः, श्रीमान् श्रीनारायणः, श्रीदेवकीनन्दनः शर्मा, श्रीराधाकृष्णः शर्मा श्रीमधुकरः शास्त्री, श्रीकृष्णलालः, श्रीलक्ष्मीचन्द्रः मिश्रः, पंडितप्रवरः कोविदरत्नं राष्ट्रपतिपुरस्कारेण पुरस्कृतः गुरुवरः जगदीशचन्द्र शर्म महोदयः प्रभृतीनां नामानि प्रसिद्धानि सन्ति । तेषां लेखाः कविताः निबन्धाश्च बहुशः प्रकाशिताः ।

कल्याणी-पत्रिका-सम्पादकः गोविन्दप्रसादः शास्त्री अष्टनाटकानि लिखितवान् । तानि चेमानि सन्ति-बालशाकुन्तलम्, कृष्णसुरामानाटकम्, हरिश्चन्द्रनाटकम्, श्रवणकुमारनाटकम्, श्रेष्ठशिष्योदाहरण-नाटकम्, भारत-विजयं-नाटकम्, भारतेतिवृन्ननाटकम्, पाकगर्वभञ्जनं नाटकम् चेति । सरलसुललित भाषायां गुम्फितानीमानि सर्वाणि पत्रिकासु प्रकाशितानि ।

सौम्यमूर्तिः साहित्यशास्त्रधुरीणः कविवर्मः डॉ० ब्रह्मानन्दः शर्मापि बहुरचनाः चकार । 'तैः "सत्यालोकः' नामकं साहित्यशास्त्रमाप्यलेखि ।

विगतविंशतिवर्षाणां नवीनलेखकेषु श्रीकलानाथः शास्त्री कांकरः, श्रीनारायणः शास्त्री, डॉ० प्रभाकरः शास्त्री, डॉ० हरिरामाचार्यः एतासां पंक्तीनां लेखकः सुभाषो वेदालङ्कारश्चेति प्रमुखाः सन्ति । श्रीमान् कांकरः "स्वातन्त्र्ययज्ञाहुतिः, 'कर्तव्य-परायणता' चेति नाटकद्वयं लिलेख। तस्य बहवो लेखाः गद्यानि निबन्धाश्चापि प्रकाशमगच्छन् । देवर्षिः कलानाथः शास्त्री विशेषेणोल्लेखनीयो ननु । तस्य निबन्ध-द्वयं "धर्मक्षेत्रे" 'कुरुक्षेत्रे' च सर्वत्र ख्यातिङ्गतम् । तस्य उपन्यासः 'जीवनस्य पृष्ठद्वयम्' अतीव रोचकः खलु । सचासौ भारतीपत्रिकायां क्रमशः प्रकाशितः ।

भट्टमथुरानाथतनयोऽयं, आकाशवाणीरूपकाण्यपि रचितवान् । तेषु च महाभिनिष्क्रमणं, चित्तौड़-सिंहः, कर्मक्षेत्रे, महर्षिः भरतः पृथ्वीराजतनयः, विक्रमादित्यश्च प्रमुखानि ननु । सर्वाणि तानि आकाशवाण्या जयपुरकेन्द्रात् प्रसारितानि । डॉ० प्रभाकरशास्त्रिणः कतिचित् कथाः शोधलेखास्तु प्रकाशिता एव । तैः सहासौ "विल्लणचरितम्" 'श्रीशंकराचार्यः' 'महाकविः माघः' इति आकाशवाणीरूपकाण्यपि लिलेख । इमानि रूपकाण्यपि जयपुरकेन्द्रात् प्रसारितानि । डा० हरिराम आचार्यः संस्कृतगीतकारो विद्यते । तेनापि कतिचित् आकाशवाणीरूपकाणि लिखितानि ।

एतस्य निबन्धस्य लेखकस्य नैकरचनाः गद्यपद्यमयाः प्रकाशिताः सन्ति । कतिचित् पुरस्कृता अपि कतिचित् विदेशेष्वपि सम्मानिता ननु । कृतीनां नाममात्रं दीयते—

**गद्य-रचनाः**

१. महाकविः कल्हणः
२. कल्हणस्य राजतरङ्गिण्यां चित्रिता भारतीय-संस्कृतिः (शोधग्रन्थः)
३. महाराणा-प्रताप-चरितम्
४. संस्कृत-निबन्ध-परिजातः

**पद्य-रचनाः**

१. संस्कृति-सुधा (पद्यकाव्यम्)
२. ईश काव्यम् "
३. ईश-स्तोत्रम् (स्तोत्रम्)
४. संस्कृत-गीताञ्जलिः
५. संस्कृत-शिशुगीतम्

इमाः रचनाः प्रकाशिताः सन्ति। अस्मिन् वर्षे प्रकाश्यमानाः कृतयस्तावदिमाः सन्ति—

१. भारतगौरवम् (हरिगीतिका-छन्दसि)

२ शेक्सपियर-शतकम्

३. संस्कृत-सोपानम् (भागचतुष्टयम्)

४. संस्कृत-शिशु-बोधः (सचित्र-पुस्तकम्)

प्रकाशितकृतीनां गुणदोषविवेचने विद्वांसो विशेषेण प्रार्थ्यन्ते मया । एतदतिरिक्तं शताधिकं लेखाः, पद्यानि, गीतिकाश्चापि प्रकाशितानि पत्रिकासु ।

इत्थञ्च स्फुटं प्रतिभाति यद् विगतेषु सप्तत्रिंशद् वर्षेषु प्रभूतं नवीन-साहित्यं सृष्टं संस्कृतेः सुरभारती-सेवकैः, राजस्थानप्रान्ते । साम्प्रतमपि च प्रभूतं विलिख्यते, विविध-शैलीषु । राजस्थाने नवीन-संस्कृत-वाङ्मय-निर्माणस्येयं प्रकृतिः सर्वथा परिवर्धते । वर्षद्वयपूर्वं, प्रदेशे 'राजस्थान-संस्कृत-अकादमी' चापि स्थापिता। तस्या अध्यक्षैः मण्डनमिश्रमहाभागैः, उपाध्यक्षैः सर्वशास्त्रपारङ्गतैः श्रीरामचन्द्र द्विवेदिभिश्चप्रेरिता उत्साहिताश्च राजस्थान-कवयः विद्वांसश्च नवसाहित्य-सर्जन-रताः सन्तः महत्त्वपूर्णं योगदानं करिष्यन्तीति बलवती मम खल्वाशा ।

———

सहायक-प्रोफेसर
**संस्कृत-विभाग**
**राजस्थान विश्वविद्यलय, जयपुर**

□ डा० भवानीलाल भारतीय

# स्वामिदयानन्दस्य चरितलेखनविषयकमन्वेषणं तत्रगताः समस्याश्च

एकोनविंश्यां शताब्द्यां भारतवर्षे धार्मिक सांस्कृतिकपुनर्जागरणस्य उन्नायको महर्षिदयानन्द ऐतिह्यप्रसिद्धेषु तेषु महापुरूषेषु प्रगण्यते, येषां विचारैः कार्यैश्च न केवलं समकालीना जना अपितु निखिल-भूमण्डलस्था विज्ञा प्रभाविताः संजायन्ते । महर्षिदयानन्दीयविचाराणां प्रचारः प्रसारश्च तेषां जीवनकाल एव भारतवर्षम्अतिक्रम्य अमेरिका-यूरोपादि महाद्वीपेषु अपि समभूत् । तस्माद् देश-विदेशस्था अनेके प्रबुद्धा जना न केवलं तेषां विचाराणामपितु जीवनमधिकृत्यापि परिचयं प्राप्तुकामाः । यद्यपि वैदिकसमाज व्यवस्थानुकूलं तुरीयाश्रममर्यादावशात् स्वामिदयानन्दः स्वजीवनवृत्ताविषये विस्तरशः वर्णने न रूचि-मादधाति स्म तथापि स्वजीवनकाल एव स निजवृत्तमधिकृत्य किमपि विज्ञापयितुं नैकधाप्रर्यातवान् ।

सर्वप्रथमं स स्ववृत्तविषयकानि कतिपयतथ्यानि तदा समुद्घाटितवान् यदा खलु महादेव गोविन्द रानाडे महाभागस्यानुरोधवशात् पूनानगर्यां भाषणमालां प्रस्तौति स्म । भाषणमालाया अन्तिमे दिवसे तथा च १९७५ तमें ख्रीष्टाब्दे ऽगस्तमासस्य चतुर्थ्यांतिथौ बुधवासरे स आत्मविषयकम् उदन्तजातं न्यवेदयत्, अस्मिन् खलु आत्मनिवेदने आकाशीशास्त्रार्थविशिष्टा जावन घटनास्तेन वर्णिताः ।

स्वदेशस्था इव वैदेशिका अपि महर्षे जीवनविषये परिचयमवाप्तुं समुत्सुका आसन् । महर्षि द्वारा स्थापितस्य आर्यसमाजस्य यशश्चन्द्रिकां स्वल्पकाल एव सर्वत्र ततां विलोक्य अमेरिकादेशे प्रस्थापितायाः थियोसोफिकलसमित्याः सदस्या अपि अमुं महापुरूष प्रति समाकृष्टाः । अथ यदा खलु थियोसोफिकल समित्याः "थियोसोफिकलस्ट" इत्याख्यस्य मुखपत्रस्य मुम्बईतः प्रकाशनं प्रारेभे तदा तत् पत्रसम्पादकस्य आग्रहवशात् महर्षि निजं चरित्रं धारावाहित्वेन प्रकाशयितुम् अङ्गीचकार । यद्यपि पत्रे ऽस्मिन् प्रकाशितं दयानन्दीयवृत्तं संक्षिप्तं नर्मदास्रोतसः गवेषणाकालं यावदेव विद्यते तथापि लिखितरूपेण समुपस्थितत्वात् तज्जीवनप्रभातस्य प्रमाणिकत्वेन विवृतत्वाच्च चरितमिदं निश्चप्रचं महत्त्वमावहति ।

स्वामिदयानन्दस्य जीवनकाल एव तच्चरितं रचयितुं पश्चिमोत्तरप्रदेशे शिक्षाधिकारित्वेन वर्तमानः पं० गोपालराव हरिः प्रयतितवान् । महानुभावोऽयं जन्मना महाराष्ट्र देशीयः फर्रुखाबादमण्डले च विद्यालय-उपनिरीक्षकश्चासीत् ।१९३७ वैक्रमाब्दे स "दयानन्द दिग्विजयार्क" इति नाम्ना दयानन्दचरितं विरचयितुं प्रारब्धवान् । गन्थस्य प्रथमो भागस्तावत् १९३८ वैक्रमाब्दे पूर्तिमगात् । खण्डेऽस्मिन् महर्षेः संक्षिप्तम् इतिवृत्तं कतिपयशास्त्रार्थानांच चर्चा चर्चिता या खलु पौराणिक जैन-मुहम्मद-ख्रीष्टमातवलम्बिभिः सह संजाताः । द्वितीयभागे दयानन्दरचितं वेदभाष्यविषयकं समालोचनं धर्मप्रचारविवरणंच प्रस्तुतम् । अयमपि भागः १९३८ वैक्रमसंवत्सरे प्रकाशनतामवाप । ग्रन्थस्यावशिष्टोंऽशः [तृतीयः खण्डः] लेखनदृष्ट्या यद्यपि १९४२ वैक्रमाब्दे पूर्णस्तथापि तत्प्रकाशनं तु १९४४ वैक्रमसंवत्सरे सजातम् । खण्डो ऽयं पूर्व-प्रकाशित-खण्डद्वयात् आकृतया विस्तरः । तत्र गोरक्षा-आन्दोलनम्, थियोसोफिस्टैः सह मतभेदः, मुंशीइन्द्रमणि विषयको विवादः, उदयपुर-शाहपुरा-जोधपुरादीनां यात्रावृत्तान्ताः अस्वस्थे सतयजमेरनगरे निर्वाणप्राप्तिः इत्याद्युदत्तजातं निहितम् ।

दिवं याते स्वामिनि पत्र-पत्रिकासु या शोकाऽभिव्यक्तिः साऽप्यत्र संकलिता। परोपकारिणी सभायाः प्रथमाधिवेशनस्य कार्यकलापो ऽप्यत्र समुद्धतः। वस्तुतो महर्षेर्जीवनविषये मूलभूतसामग्री सर्वप्रथम् अत्र प्रस्तुता यस्या आश्रय उत्तरवर्तिभिर्जीवनचरितलेखकैः सर्वैरेवअङ्गीकृतः। अस्मिन् ग्रन्थे पत्र-पत्रिकाणाम् उद्धरणानि लघुग्रन्थानां प्रत्यक्षदर्शिनांच वक्तव्यानि, स्वामिनः पत्र व्यवहारश्च प्राचुर्येण समाकलितानि।

१८८५ तमे ख्रीष्टाब्दे दिसम्बरमासे श्रीमत्या परोपकारिणीसभया स्वकीये द्वितीयाधिवेशने महर्षिदयानन्दस्य विशदं तथ्यात्मकंच चरितं लेखयितुं प्रस्ताव एकः स्वीकृतः। तदनुसारं सभाया उपसंचिवेन पं० मोहनलालविष्णुलाल पण्डया महाभागेन भारो ऽयं शिरसा वोढुमंगीकृतः। देशवासिनः खलु महर्षिसम्बद्धं वृत्तजातं पण्डयासकाशं प्रेषयितुं प्रेरिताः। परं नायं प्रयासः सफलीभूतः। पण्डयामहाभागस्य प्रमाद एव कारणमत्र संभाव्यते।

दिवं यातस्य दयानन्दस्य पंचसु वर्षेष्वतीतेषु पंचनदप्रदेशीयार्यप्रतिनिधिसभया प्रस्तावमेकं स्वीकृत्य आर्यसमाजप्रवर्त्तकस्य महर्षेः प्रामाणिकं विशदंच चरितं लेखयितुं निश्चयो विहितः। अन्वेषणप्रियः स्वाध्यायशीलश्च पं० लेखराममहाभागः कार्यमिदं साधयितुं प्रार्थितः। पं० लेखरामस्तु दयानन्दीयचरितविषयकं तथ्यजातं संकलयितुं रात्रिन्दिवं प्रयासं प्रारब्धवान्। यत्र कुत्रापि महर्षिः स्वजीवनकाले जगाम तत्र सर्वत्र पं० लेखरामश्चचार एवंच महर्षिजीवनविषयकं तथ्यनिवहं गवेषयितुं प्रायतत। चेत् प० लेखरामो न तावत् काले कालकवलितो भविष्यत् तर्हि निश्चप्रचमेव दयानन्दर्षेः समग्रमपि चरितं व्यवस्थितं प्रामाणिकंच समुपलप्स्यत। परं १८९७ तमे ख्रीष्टाब्दे मार्चमासस्य षष्ठयां तारिकायां मतान्धस्य खलु यवनस्य घातकप्रहारेणाहतो लेखरामो दिवं प्रयातस्तथा च तत्संकल्पितं कार्यं न पूर्णतामियात्। यद्यपि तस्मिन्नेव वर्षेऽक्टूबरमासे मं० मुंशीरामस्य प्रेरणया पं० आत्माराम अमृतसरी महाभागः पं० लेखरामद्वारा सकलितां सामग्रीं व्यवस्थितरूपतया प्रकाशितवान्, तथापि तत्तु सग्रहमात्रमेवावर्त्तत। साहित्यिकशैल्यां लिखित चरितस्य तत्त्वजातं तत्र स्वल्पमेव।

तथापि एतत्तु स्वीकार्यमेव यत् स्वामिनश्चरितलेखनविषये येऽपि प्रयत्ना अनन्तरं संजातास्तेषाम् आधारस्तु लेखरामरचितम् उर्दूभाषानिबद्धं चरितमेव। दयानन्दद्वारा धर्मंसमाजं राष्ट्रंच प्रति विहितकार्याणां प्रयत्नानां चायम् ऐतिहासिक आलेखः, यं साधयितुं लेखकेन अत्यध्यवसायो विहितः। सहस्रशः पुरुषाणां प्रत्यक्षसाक्षित्वम्, विभिन्नभाषासु प्रकाशितपत्र पत्रिकाणामुद्धरणानि एवं चान्यप्रमाणान्याधारीकृत्य लिखितो ऽयं ग्रन्थो लेखकस्य प्रभूतश्रमस्य परिचायकः।

लिखितमेव इदं तावत् पूर्वमस्माभिर्यद्देशवासिन इव विदेशस्था अपि जना वैदिकधर्मपुनरुद्धारकस्य, प्रत्न-आर्य-जीवनस्य साक्षात्कर्तुर्महापुरुषस्य दैनन्दिनजीवनचर्यां ज्ञातुमभिलषन्ति स्म। अतएव यूरोपीय भाषाऽनभिज्ञेऽपि, पाश्चात्यचिन्तनप्रक्रिययाऽपरिचितेऽपि दयानन्दे तेषाम् अदभ्यविचाराणां विस्तृतं प्रभावं परिलक्ष्य सुप्रसिद्धो जर्मनदेशीयो विद्वच्चूडामणिः प्राध्यापको मैक्समूलरोऽपि दयानन्दविषये किमपि लेखितुं कृतसंकल्पोऽभवत्, स्वामि उपरतस्य गते खल्वेकस्मिन् वर्षे इंग्लैण्डदेशात् प्रकाशिते मासिकपत्रे महर्षिविषये निबन्धमेकं लिलेख। एवमेव यदा रामकृष्णमिशनप्रेरणया सुप्रसिद्धः फ्रैंचदेशीयो रोमां रोला महाभागो रामकृष्णपरमहंसस्य चरितं लिलेख तदा 'Builders of unity' इति शीर्षकान्तर्गते ऽध्याये स स्वामिदयानन्द विषयेऽपि स्वविचारान् प्राकटयत्।

एकोनविंश्याः शताब्द्या अन्तिमे दशके बंगप्रान्तीय लेखकः श्री देवेन्द्रनाथमुखोपाध्यायो दयानन्दचरित-

लेखने प्रवृत्तः । स खलु इतः पूर्वं सन्तपालस्य चरितं लिखित्वा प्रसिद्धिमभजत । यदा खलु कलिकाल आर्य-समाजस्य अधिकारिभिः स स्वामिदयानन्दस्य विस्तृतं जीवनपरिचयं लेखितुं सानुरोधं प्रार्थितस्तदा मुखो-पाध्यायस्तन्महत्कार्यं स्कन्धेन वोढुं सद्य एव तत्परोऽभवत् । स ह्येकान्तनिष्ठया साधनया च समन्वितो ऽन्वेषणकार्ये संलग्नः, तदानीं यावद् अज्ञात-अल्पज्ञात-अन्यथाज्ञाततथ्यानां सम्यगवबोधस्तेन साफल्येन विहितः । प्रयोजनमिदं साधयितु स विभिन्नस्थानेषु विचचार, विविधजनैः साक्षात्कारेण दयानन्दचरित विषयक-सामग्र्याः संग्रहस्तेन विहितः । प्रथमं तावद् "दयानन्द चरित" इति नाम्ना बगलाभाषायां स एकं लघुचरितं महर्षेरलिखत्. परं तत्कालं यावन्न स दयानन्द विषयकेण गवेषणकार्येण पूर्णतया संतुष्टिं जगाम । अतः पुनरपि स तथ्यसंग्रहे सोत्साहं प्रवृत्तः । १९१५–१६ यावद् दयानन्दचरितविषयकसामग्र्याः संकलनं विधाय देवेन्द्रनाथो महर्षेर्विस्तृतं चरितं लेखितुं प्रारब्धवान् ।

देवेन्द्रनाथो दयानन्दविषये यत्खलु विशिष्ट तथ्यजातम् अन्वेषितवान् तत्र पितुर्वास्तविकं नाम जन्मस्थानस्य च निर्धारणमिति महत्वपूर्णम् । इतः पूर्वं लेखरामो महर्षेर्जन्मस्थानं सौराष्ट्रराज्यस्य मौरवी-नगरं पिता च अम्बाशंकरनामधेय इति मतं प्रस्थापितवान् । परं देवेन्द्रनाथगवेषणया दयानन्दजन्मभूमिः मौरवीराज्यान्तर्गतटंकाराग्रामः पिता च करसनजी लाल जी तिवाड़ी इति प्रामाणिकतया सिद्धम् । देवेन्द्र-नाथः खलु वाराणस्यां महर्षेश्चरितम् आरचयितुं प्रारब्धवान्, स तावद् भूमिकां चतुरोऽध्यायांश्चैव सम्पूर-यितुं शशाक यावद् अर्द्धांगरुजा पीडितः स पंचत्वं ययौ । अहो विचित्रा हि दैवगतिः । दयानन्दचरित न तु पं० लेखरामो न हि देवेन्द्रनाथ एव पूर्णतया लेखनेऽशक्नोत् । अनन्तरं घासीरामो देवेन्द्रनाथद्वारा संकलितां सामग्रीमाश्रित्य अवशिष्टं चरितं लिलेख । परम् एतत्तु स्वीकार्यमेव यद् या खलु दृष्टिर्देवेन्द्रनाथस्यवर्तते न सा घासीरामलिखितचरिते दृग्गोचरीभवति । इतोऽनन्तरं स्वामिसत्यानन्दो दयानन्दचरितलेखने प्रवृत्तः । तेन देवेन्द्रनाथद्वारा संगृहीतसामग्र्या अपि समुपयोगो विहितः । स्वयमपि स यत्र-तत्र परिभ्रम्य तथ्यसंचयाय प्रयतितवान् । तद्रचिते "दयानन्दप्रकाशे" न तावद् ऐतिहासिकदृष्टिः प्रधानतः या परिलक्ष्यते । भावनाप्रवणलेखकस्य भावनात्मकशैल्यां लिखिता भक्तिप्रधानरचना सा । लेखरामो ह्यांग्लभाषाऽनभिज्ञोऽ-तो न तेन आंग्लभाषापुस्तकेभ्यः पत्रेभ्यश्च प्राप्तसामग्र्याः समुपयोगो विहितः । स्वामीसत्यानन्दविषयेऽपि तुल्यमेतत् । परं देवेन्द्रनाथेन तु आंग्लबंगलादिभाषाभ्यः प्राप्तसामग्र्याः प्रचुरः प्रयोगो विहितः । बंगमहा-राष्ट्रसदृशेषु प्रान्तेषु चिराय परिभ्रम्य तेन दयानन्दविषये विविधा नूतना वार्त्ताः विज्ञाताः ।

वक्तुमिदं शक्यम्-यत् पं० लेखरामदेवेन्द्रनाथयोरनन्तरं दयानन्दचरितविषयकम् अन्वेषणकार्यं प्रायः समुपेक्षितमेवाऽभवत् । तथापि जयचन्द्रपृथ्वीसिंहविद्यालंकाराभ्यां दयानन्दचरितविषये कश्चन नूतनो ऽपि पक्षः समुपस्थापितः । पृथ्वीसिंहमेहता महाभागेन "हमारा राजस्थान" इति ग्रन्थे १८५७ तमे ख्रीष्टाब्दे संजाते स्वतन्त्रतासंग्रामे दयानन्दस्य योगदानविषये कश्चित् संकेतः कृतः । वय पश्यामो यद् आत्मचरिते नर्मदास्रोतसो गवेषणं यावत् जीवनवृत्तं तु समुपलभ्यते परं भाविनो वर्षत्रयस्य वृत्तजातं न तत्र विनि-र्दिष्टम् । मेहतामहोदयेन प्रसंगममुमाधारीकृत्य दयानन्दस्यापि स्वतन्त्रतासंग्रामे भागग्रहणं तावत् संभावितम् । तथोक्तं तेन–" क्रान्तियुद्धं प्रति अथवा तत्संगठनं प्रति तस्य कीदृशी अभिरूचिरवर्तत. तत्र तेन साक्षाद् भागो गृहीतो न वेति निश्चयेन न किमपि वक्तुं शक्यम् । तथापि महर्षेर्जीवनघटनानां यस्तिथिक्रमोऽ-स्मिाभिरुपरि निर्दिष्टस्तेन एतत्तु स्पष्टमेव यत् क्रान्तिकार्यक्रमैर्नैकट्येन परिचयं प्राप्तुम् अवसरस्तु तेन निश्चप्रचम् अवाप्तः । दयानन्दसदृशो भावनाप्रवणो युवा तत् प्रभावेन अस्पृष्ट एव अभविष्यत्, यद्वा युद्ध-साफल्यं वैफल्यं वा प्रति न तच्चेतस काऽपि प्रतिक्रिया जनिष्यत इति तु न कथमपि मन्तुं शक्यते । अतो वर्षत्रयविषयकं तस्य मौनम् अस्ति तावद् गभीरार्थगर्भितम् । "जयचन्द्रविद्यालंकारस्यापि तर्कजातम् अत्र

समानमेव । साधुसम्प्रदाये प्रचलिताया अनुश्रुत्या उल्लेखस्तत्र वैशिष्ट्येन यत्र दयानन्दस्य १८५७ संग्रामे साक्षाद्भागग्रहणं स्वीकृतम् ।

यावन्न सुस्पष्टं प्रमाणमुपलभ्यते तावद् अस्मिन् विषये किमपि कथनं नोपयुक्तं स्यात् । एवमपि महर्षिर्गृहत्यागसमये सत्यधर्मजिज्ञासया मुक्तिपथान्वेषणधिया च देशाटने प्रवृत्तः । तत्कालं तावन्न तदीयं राजनीतिकं चिन्तनं प्रौढिताम् अभजत न च वैदेशिकं शासनं प्रति तद्हृदि कश्चिद् उग्रो विचारः समुत्पन्नः । एवं महर्षेस्तात्कालिकविचाराणां परिज्ञानाद् उपर्युक्तमतस्य आपात-रमणीयत्वमेव प्रतीयते । तथापि मेहता विद्यालंकाराभ्याम् अस्मिन् विषये यत् सम्भावितं तत्र सावहिततया विचारोऽपेक्षितः । दुःखास्पदमिद यत् १८५७ स्वतन्त्रतासंग्रामे दयानन्दस्य भूमिकामधिकृत्य तथ्यात्मकमन्वेषणमपहाय वासुदेव वर्मा पिण्डीदासज्ञानी सदृशाः लेखकाः स्वतन्त्रतासंग्रामस्य श्रेयः महर्षये दातुकामा दरीदृश्यन्ते पर तैः ह्यैतिह्यम् औचित्यं च कथं व्याहन्यत इति न तैस्तावद् विचारितम् ।

१८७१-७३ इति कालावधौ कदाचिद् दयानन्दः कंचित् कालं बंगप्रान्तेऽ प्युवास । बंगपत्रैस्तात्कालिकं महर्षेर्यात्राविवरणमपि प्रकाशितम् । कानिचित् वर्षाण्यतीतानि यदा कलिकातार्यसमाजस्य पं० दीनबन्धुः वेदशास्त्री हस्तलिखितं पुस्तकमेकमन्विष्य प्रकाशमानीतवान् यच्च तन्मते बंगप्रान्ते स्वामिनं निमन्त्रयितुं ब्राह्मनेतुर्हेमचन्द्र चक्रवर्ती महाभागस्य दैनन्दिनी खल्ववर्त्तत । कलिकातायां चक्रवर्ती महाभागः स्वामिनः सान्निध्ये न्यवसत् योगसाधनं च शिक्षितवान् । इयं दैनन्दिनीवेदशास्त्रिणाऽनेकेषु पत्रेषु प्रकाश्यमानीता ।तन्मतेच स्वामिस्वतन्त्रानन्देनापि "दयानन्द प्रसंग" इति नाम्ना दैनन्दिनीयं हिन्दी भाषायामनूदिता, यस्या प्रकाशनं कलिकातार्यसमाजद्वारा सम्पन्नम् । चिराय अस्माभिरस्या दैनन्दिन्याः प्रामाणिकत्वं स्वीकृतं तथा च अस्याः साहाय्येन दयानन्दस्य बंगप्रवासचरितं ज्ञातुमपि प्रयासो विहितः, तथापि कालान्तरे ह्यस्याः प्रामाणिकत्वमधिकृत्य चेतः संशयं भेजे । संशयमपाकर्तुं यदाऽस्माभिः कलिकातार्यसमाजस्थाः "दयानन्द प्रसंगइति" पुस्तकविषये पृष्ठास्तदा तन्मन्त्रिणा वयमेवं सूचिता यन्नात्र पुस्तकं तत् समुपलभ्यते तत्सामग्री तु "आर्यसंसार" इत्याख्ये कलिकातार्यसमाजस्य मुखपत्रेऽवश्यं धारावाहित्वेन वेदशास्त्रिणा प्रकाशिता ।

ततोऽस्माभिः स्वामिस्वतन्त्रानन्दद्वारा संस्थापितस्य दीनानगरोयदयानन्दमठस्याध्यक्षः स्वामिसर्वानन्दः (यो हि स्वामिस्वतन्त्रानन्दस्य शिष्यः) अपि पुस्तकविषये पृष्ठः । ततोऽपि निषेधात्मकमेव दलमस्माभिः प्राप्तम् । अहो आश्चर्य, स्वामिस्वतन्त्रानन्दद्वारा खल्वनूदितो ग्रन्थो न च कलिकातायां नेव च स्वामिनः स्वकीये पुस्तकालये । अस्माकं संशयस्तदा दृढ़तां ययौ यदा दीनबन्धुद्वारा प्रस्तुतं सर्वथा प्रामाणिकं स्वमनोविजृम्भितं "योगी का आत्मचरितः" अथवा "दयानन्द की अज्ञातजीवनी" इत्याख्यं महर्षिविषयकं नूतनं वृत्तमस्माभिर्दृष्टम् । बंगप्रान्ते पाण्डुलिपिरूपेण प्राप्तां सामग्रीमिमामनूद्य यदा दीनबन्धुः "सार्वदेशिक" इति साप्ताहिकपत्रे धारावाहित्वेन प्रकाशयितुं प्रारेभे तदैव वयं संशयदृष्ट्या सामग्रीमिमां दृष्टवन्तः । परं यदा शनैश्शनैरस्या अविश्वसनीयत्वं निश्चप्रचम् अस्माभिः निर्धारितं तदा दयानन्दचरिते विकृतिमापादयितुः प्रयासस्यास्य विरोधं कर्तुं वयमपि समुद्यताः । सन्तोषावहमिदं यद् दयानन्दचरितस्य विमर्शयितार एतेद्देशीया अन्यदेशस्थाश्च डा० जार्डन्स सदृशा विद्वांसोऽस्माकं सत्प्रयासं प्रशंसितवन्तः, चमत्कारिकम् अलौकिकतत्वजातं दयानन्दचरिते समावेशयितुंश्च समाक्षिप्तवन्तः । संप्रति ग्रन्थस्यास्य प्रामाण्यप्रतिपादने न तु पं० दीनबन्धुः समर्थो न च तत्समर्थको योगी सच्चिदानन्दः ।

गतेषु वर्षेषु पंचनदप्रदेशीयविदुषः अलखधारीमहाभागस्य लेखमेकमाश्रित्य १८७३ तमे ख्रीष्टाब्दे भारतस्य गवर्नरजनरल लार्ड नार्थब्रुकस्य महर्षिणा दयानन्देन सह कलिकातानगर्यां सम्मेलनविवरणमपि पत्र-

पत्रिकासु प्रायश्चर्चाविषयीभूतम् । परम् अस्य प्रसंगस्य प्रामाणिकत्वम् अनुसंधानं तु न तावत्केनापि प्रयासो विहितः। विवशाः सन्तः वयमेव विषयममुं पत्रेषु चर्चितवन्तः। अस्माभिरार्यसमाजस्य सभाः संस्थाश्च निवेदिता यद् भारतस्य राष्ट्रीयाभिलेखागारे लन्दनस्थितपुरातात्विकलेखागारेषु च सुरक्षितायास्तात्कालिक सामग्र्या अनुसंधानं विधाय प्रसंगस्तस्य प्रामाणिकता निर्द्धारणीया । अहो कष्टम् न केनापि निवेदनमस्माकं सावहिततया श्रवणविषयीकृतम् । इयं शोच्या स्थितिः खल्वार्यसमाजेऽन्वेषणविषये ।

सारांशोऽयं यद् दयानन्दस्य चरितलेखनस्य समग्रत्वं प्रामाणिकत्वं तदैव सेत्स्यति यदा ह्यद्यावधि लिखितचरितानां तुलनात्मकं परिशीलनं विधीयेत, एवं च तत्र व्यक्तेषु तथ्येषु घटनासु च पूर्वापरक्रमस्य निश्चयः क्रियेत । अथ च ताकालिकदेशविदेशस्थपत्रपत्रिकासु प्रकाशिताः महर्षिविषयकाः संदर्भा पुनरपि समन्विष्य यथास्थानं नियोजिता स्युः, अन्या च या सामग्री न तावदद्यावधि प्राकाश्यं प्राप्ता, तस्या अप्यन्वेषणं विधीयते । निश्चप्रचम्, दयानन्दचरितलेखनंशुभात्मकेन अध्यवसायेन निष्ठया चैव साध्यम् ।

---

अध्यक्ष, दयानन्द अनुसंधान पीठ
**पंजाब विश्वविद्यालय, चण्डीगढ़**

□ डॉ० रामकिशोर मिश्र

# छन्दस्कारों में कालिदास का योगदान

श्रुतबोध एक छन्दोविषयक लघुग्रन्थ है। इसके रचयिता महाकवि कालिदास माने जाते हैं। राजशेखर (१०वीं शती ई०) ने तीन कालिदासों की सत्ता के प्रति पूर्ण सङ्केत किया है।[१] काव्यजगत् में कालिदास की प्रसिद्धि से अवान्तरकालीन बहुत से कवियों ने 'कालिदास' का प्रसिद्ध अभिधान धारण कर अपने व्यक्तित्व को छिपा दिया था। अतः कालिदास की सत्ता ईशापूर्व परमारवंशीय प्रथम विक्रमादित्य से लेकर धारानगरी के राजा भोज के समय (१२०० ई०) तक मानी जाती है। यह पता नहीं चलता कि श्रुतबोध उनमें से कौन से कालिदास की रचना है। कालिदास के नाम से प्रकाशित होने के कारण उसे यहाँ शेष लौकिक छन्दःशास्त्रीय ग्रन्थों से पूर्व ही स्थान दिया गया है।

श्रुतबोध में कुल ४३ श्लोक हैं, जिनमें प्रथम तीन श्लोकों में ग्रन्थ के नाम, गुरुलघुवर्ण तथा गणादिलक्षण पर प्रकाश डाला गया है, और ४० श्लोकों में आर्या से स्रग्धरा तक प्रसिद्ध ४० छन्दों का वर्णन है। इस छन्दोग्रन्थ की यह विशेषता है कि इसमें छन्दों को गुरुलघुवर्णों के आधार पर छन्द लक्षित किये गये हैं। यह ग्रन्थ लक्ष्यलक्षणप्रधान है, इसमें जिस छन्द का जिस पद्य में लक्षण किया गया है, उस छन्द का वही पद्य उदाहरण भी है।

इसके छन्दों पर दृष्टिपात करने से यह ज्ञात होता है कि श्रुतबोध में केवल मात्रिक तथा वार्णिक लौकिक छन्दों का ही वर्णन है। मात्रिक छन्दों में केवल तीन छन्द ही वर्णित है, और वार्णिक छन्दों में सैंतीस छन्द; जिनमें छत्तीस छन्द समवार्णिक हैं और केवल एक छन्द अर्धसमवार्णिक। छन्दों की एकाक्षर में छब्बीस अक्षरों तक वृत्तियाँ होती हैं, उनमें से इसमें उक्ता, अत्युक्ता, मध्या, प्रतिष्ठा, अष्टि, कृति, आकृति, विकृति, संकृति, अभिकृति और उत्कृति नामक छन्दोवृत्तियों में किसी भी छन्द का विवरण प्राप्त नहीं होता, और विषमपाद के भी किसी छन्द का विवरण नहीं मिलता। अनुष्टुप् और पद्य, उपजाति और आख्यानकी छन्द लक्षणानुसार एक ही हैं।[२] केवल उनके नाम ही पृथक्-पृथक् दिये हैं। सम्भवतः ग्रन्थ का रचयिता इन्द्रवज्रा छन्द के प्रथमपाद और उपेन्द्रवज्रा छन्द के अन्तिम तीन पादों से युक्त इन्द्र को उपजाति का भेद न मानकर आख्यानकी नामक छन्द के रूप में उसकी पृथक् सत्ता स्वीकार करता है[३], और अनुष्टुप् छन्द को ही पद्य नाम प्रदान करता है।[४] इससे स्पष्ट है कि ग्रन्थ में कुछ प्रसिद्ध तथा प्रचलित छन्दों का ही वर्णन है।

श्रुतबोध में दिये गये उपजाति और आख्यानकी छन्द के पर्यवेक्षण से ज्ञात होता है कि इसके रचयिता के समय में भरतकृत नाट्यशास्त्र और अग्निपुराण तथा पिङ्गलीय छन्दः सूत्र के अतिरिक्त पश्चाद्वर्ती जनाश्रयकृत छन्दःशास्त्रीय जानाश्रयी छन्दोविचिति (६०० ई०) आदि रचनायें विद्यमान नहीं थीं, जिनमें उपजाति (इन्द्रमाला) छन्द के १४ भेद प्रदर्शित किये गये हैं।[५] उक्त चतुर्दश भेदों में पिङ्गलोक्त उपजाति और आख्यानिकी तथा विपरीताख्यानिकी छन्द समाहित हो जाते हैं किन्तु श्रुतबोधकार ने उपजाति का लक्षण पिङ्गलोक्त लक्षण के आधार पर दिया है और उसके अन्य भेदों का उल्लेख नहीं किया, जैसा कि उन्होंने आख्यानिकी के लक्षण में उसे विपरीतपूर्वा कह कर उसके दोनों भेदों के प्रति संकेत किया है। यदि श्रुतबोध जानाश्रयी छन्दोविचिति के बाद की भी रचना होती तो उसके उपजाति छन्द के लक्षण में भेदों का निर्देश अवश्य होता।

पिङ्गल ने उपजाति छन्द वही माना है, जिसमें इन्द्रवज्रा और उपेन्द्रवज्रा के दोनों पाद हो।[६] इसके अतिरिक्त उन्होंने अन्य भेदों का उल्लेख नहीं किया, और इसे ही श्रुतबोधकार ने भी मान्यता दी है।[७] जानाश्रयी छन्दोविचित में तो आख्यानिकी और विपरीताख्यानि की छन्द के पाद उपजाति छन्द में समाहित कर दिय गये हैं, जिससे वहाँ आख्यानिकी छन्द के दोनों भेदों की स्वतन्त्र सत्ता नहीं रहती, क्योंकि उनमें इन्द्रवज्रा और उपेन्द्रवज्रा के चरणों का विधान है, जो कि उपजाति के चतुर्दश भेदों में गृहीत कर लिये गये हैं।[८] पिङ्गल ने उन दोनों छन्दों को स्वतन्त्र मानकर लक्षित किया है[९], और इसी आधार पर कालिदास ने भी उस आख्यानिकी छन्द को एक स्वतन्त्र छन्द माना है, तथा पिङ्गलोक्त लक्षण से भी भिन्न लक्षित किया है।[१०] यह श्रुतबोध का स्वतन्त्र छन्द है, जो जानाश्रयी के इन्द्रमाला (उपजाति) के चतुर्दश भेदों में गृहीत किया गया है।[११] अतः श्रुतबोध में इस छन्द की स्वतन्त्र सत्ता के आधार पर यह माना जा सकता है कि कालिदास की यह रचना जानाश्रयी छन्दोविचिति (६०० ई०) से पूर्व की है, अन्यथा इस पर उसका प्रभाव अवश्य होता।

जयदेव ने श्रुतबोधकार का अन्य मत से चम्पकमाल छन्द का उल्लेख कर निर्देश किया है।[१२] अतः जयदेव के समय (६००-६०० ई०) में श्रुतबोध का प्रचार हो चुका था। इसमें प्रसिद्ध ४० लौकिक छन्दों के लक्षण सोदाहरण मिलते हैं, जिनमें से कालिदास का लौकिक छन्दःशास्त्र में स्वतन्त्र लक्षित छन्दोरूप में निम्नाङ्कित योगदान है—

कालिदास के स्वतन्त्र लक्षित छन्द

समवृत्त

१. मदलेखा (सप्ताक्षरपाद–म स ग) श्रुतबोध[१३]—पद्य ६
२. हंसी (दशाक्षरपाद–म भ न ग) श्रुतबोध—पद्य १६
३. प्रभावती (त्रयोदशाक्षरपाद–त भ स ज ग) श्रुतबोध—पद्य ३५

विषमवृत्त

१. अनुष्टुप्[१४] (श्लोक) अष्टाक्षरपाद ८, ८, ८, ८ (सर्वत्र पञ्चम वर्ण लघु तथा षष्ठ गुरु और द्वितीय तथा चतुर्थपाद में सप्तम लघु एवं प्रथम तथा तृतीय पाद में सप्तम गुरु)—
श्रुतबोध--पद्य–१०
२. पद्य—अष्टाक्षरपाद ८, ८, ८, ८ (सर्वत्र पञ्चम वर्ण लघु और द्वितीय तथा चतुर्थ पाद में सप्तमवर्ण लघु एवं षष्ठवर्ण दीर्घ)—श्रुतबोध, पद्य ११
३. विपरीताख्यानिकी (आख्यान की[१५]) एकादशाक्षरपाद ११, ११, ११, ११ (प्रथम चरण इन्द्रवज्रा-त त ज ग ग का और शेष चरण उपेन्द्रवज्रा—ज त ज ग ग के)—श्रुतबोध, पद्य–२४

उपर्युक्त विवरण से ज्ञात होता है कि कालिदास के छन्दोजगत् में समवृत्तों में तीन और विषमवृत्तों में तीन के योग से छः छन्द स्वकृत तथा प्रथमवार लक्षित छन्द हैं, जो पूर्ववर्ती छन्दःशास्त्रीय रचनाओं (भरतकृत नाटचशास्त्र[१६], अध्याय १५, १६ तथा ३२ तथा पिङ्गलकृत छन्दः सूत्र एवं अग्निपुराण[१७] अध्याय १७१, १७२, १७३ तथा [१८]अध्याय ३३१, ३३२, ३३३, ३३४, ३३५) में लक्षित नहीं हुये हैं।

इसके अतिरिक्त श्रुतबोध में आर्या, गीति, उपगीति, अक्षरपंक्ति, शशिवदना, माणवकाक्रीड, नगस्वरूपिणी, विद्युन्माला, चम्पकमाला, मणिबन्ध, शालिनी, मन्दाक्रान्ता, दोधक, इन्द्रवज्रा, उपेन्द्रवज्रा, उपजाति, रथोद्धता, स्वागता, वैश्वदेवी, तोटक, भुजङ्गप्रयात, द्रुतविलम्बित, प्रमिताक्षरा, हरिणीप्लुता, वंशस्थ, इन्द्रवंशा, प्रहर्षिणी, वसन्ततिलका, मालिनी, हरिणी, शिखरिणी, पृथ्वी, शार्दूलविक्रीडित और स्रग्धरा नामक ३४ छन्दों के लक्षण मिलते हैं, जो पूर्ववर्ती छन्दः शास्त्रीय ग्रन्थ नाटचशास्त्र, छन्दः सूत्र

और अग्निपुराण में लक्षित हो चुके हैं । अतः लौकिक संस्कृत के छन्दस्कारों में कालिदास का छः छन्दों की रचना करने और उनके लक्षण प्रस्तुत करने का योगदान है ।

कालिदास के बाद जो छन्दःशास्त्रीय रचनाएँ लिखी गयीं, उनका रचयिताओं के नामों के साथ कालक्रमानुसार विवरण निम्नाङ्कित है—

(१) जनाश्रयकृत् जानाश्रयी छन्दोविचिति (६०० ई०), (२) जयदेवकृत जयदेवछन्दः (६००–६०० ई०), (३) स्वयम्भूकृत स्वयम्भूच्छन्दः (७००–१००० ई०), (४) नन्दिताढयकृत् गाथालक्षण, (८००–१००० ई०) (५) भट्ट उत्पलकृत बृहत्संहितावृत्ति (१००० ई०), (६) जयकीर्तिकृत छन्दोऽनुशासन (१००० ई०), (७) विरहाङ्ककृत वृत्तजातिसमुच्चय (१००० ई०), (८) राजशेखरकृत छन्दःशेखर (११०० ई०), (९) क्षेमेन्द्रकृत सुवृत्ततिलक (११०० ई०), (१०) भट्टकेदारकृत वृत्तरत्नाकर (११०० ई०), (११) रत्नमञ्जूषा (रचयिता अज्ञात, ११०० ई०), (१२) हेमचन्द्रकृत छन्दोऽनुशासन (११५० ई०), (१३) सुल्हणकृत सुकविहृदयानन्दिनी (११८९ ई०), (१४) कविदर्पण (रचयिता अज्ञात, ११०० ई०), (१५) जिनप्रभकृत अजितशान्तिस्तवटीका (१३०० ई०), (१६) प्राकृतपैङ्गल (रचयिता अज्ञात, १३२५ ई०), (१७) रत्नशेखरकृत छन्दःकोश (१३५० ई०), (१८) दामोदरमिश्रकृत वाणीभूषण (१४०० ई०), (१९) गङ्गादासकृत छन्दोमञ्जरी (१५०० ई०), (२०) वेङ्कटेशकृत वृत्तरत्नावलि (१६००–१६५० ई०), (२१) रामचन्द्रविबुधकृत वृत्तरत्नाकरटीका (१६०० ई०), (२२) चन्द्रशेखर-भट्टकृत वृत्तमौक्तिक (१६१८ ई०), (२३) लक्ष्मीनाथभट्टकृत वृत्तमौक्तिक भाग–२ (१६१९ ई०), (२४) समयसुन्दरकृत वृत्तरत्नाकरटीका (१६३७ ई०), (२५) भास्करकृत वृत्तरत्नाकरसेतु (१६७५ ई०), (२६) नारायणकृत वृत्तरत्नाकरनारायणी (१६८० ई०), (२७) श्रीकृष्णभट्टकृत वृत्तमुक्तावली (१७३२–१७४३ ई०), (२८) जनार्दनकृत वृत्तरत्नाकरभावार्थदीपिका (१७८९ ई०), (२९) राधादामोदर कृत छन्दः कौस्तुभ (१८४७ ई०), (३०) दुःखभञ्जनकृत वाग्वल्लभ (१८८३ ई०), (३१) देवीप्रसादकृत वाग्वल्लभवरवर्णिनी (१९२८ ई०), (३२) दीनेशचन्द्रदत्तकृत छन्दःसन्दोह (१९६८ ई०), (३३) रामकिशोरमिश्रकृत[११] छन्दोऽनुसन्धानम् (१९८२) ये ३३ छन्दः शास्त्रीय रचनायें हैं ।

कालिदासकृत श्रुतबोध (ईशापूर्व प्रथम शती) से पूर्ववर्ती तीन छन्दः शास्त्रीय रचनायें प्राप्त होती हैं, जिनमें सर्वप्रथम भरतमुनिकृत नाट्यशास्त्र (ईशापूर्व ५वीं शती), द्वितीय रचना पिङ्गलकृत छन्दःसूत्र (ईशापूर्व ३००–४०० वर्ष) और तीसरी रचना अग्निपुराण (ईशापूर्व प्रथमशती) है । इसप्रकार इन लौकिक संस्कृत छन्दः शास्त्रीय ३७ रचनाओं में २१५० छन्दों के लक्षण मिलते हैं, जिनमें कालिदास का छन्दस्कारों में चतुर्थस्थान के साथ छः छन्दों का योगदान है ।

---

**संकेत-सन्दर्भ—**

१. 'एको न जीयते हन्त कालिदासो न केनचित् ।
श्रृङ्गारे ललितोग्दारे कालिदासत्रयी किमु ।।'—सूक्तिमुक्तावलिः ।
द्रष्टव्य—बलदेव उपाध्यायकृत संस्कृतसाहित्य का इतिहास, पृष्ठ १८२ ।

२. कालिदासकृत श्रुतबोध, पद्य—१०, ११ तथा २३, २४, वाराणसी १९७२ ।

३. श्रुतबोध पद्य–२४ जब कि जानाश्रयी छन्दोविचितिवृत्ति–४/२६–३७ में आख्यानिकी को उपजाति (इन्द्रमाला) के चतुर्दश भेदों में समाहित कर दिया गया है । द्रष्टव्य—जानाश्रयी छन्दोविचिति त्रिवेन्द्रम् (तिरुअनन्तपुरम्) १९४९ ।

४. श्रुतबोध, पद्य—१० और ११ ।

५. जानाश्रयी छन्दोविचिति—४/३६-३७। हेमचन्द्रकृत छन्दोऽनुशासन—२/१५६।
६. पिङ्गलकृत छन्दः सूत्र—६/२३, अखिलानन्दशर्मा, मेरठ १९०९।
७. श्रुतबोध, पद्य—२३, कनकलाल ठक्कुर, वाराणसी, १९७२।
८. जानाश्रयी छन्दोविचिनिवृत्ति—४/३७।
९. छन्दः सूत्र—५/३७-३८। १०. श्रुतबोध, पद्य—२४।
११. जानाश्रयी छन्दोविचिति—४/३६-३७ के वृत्तिभाग में—'पर्याप्तपुष्प'—पद्य, पृ० ३९।
१२. चम्पकमाला वाऽन्यमतेन'—जयदेवच्छन्दः—६/१४।
१३. श्रुतबोध, विद्याभवन, संस्कृतग्रन्थमाला नं० ३४, चौखम्बा, वाराणसी, १९७२।
१४. कालिदास ने अनुष्टुप् को श्लोक नाम दिया है। श्रुतबोध, पद्य—१०।
१५. कालिदास ने इसे आख्यानकी नाम दिया है। श्रुतबोध, पद्य—२४।
१६. भरतमुनिकृत नाटचशास्त्र, बनारस १९८५ वि० सं०, १९२९ ई०, बड़ौदा १९३४ ई०।
१७. अग्निपुराण, श्रीरामशर्मा, संस्कृतसंस्थान, ख्वाजा कुतुब, बरेली।
१८. अग्निपुराण, बलदेव उपाध्याय, चौखम्बा, वाराणसी, १९६६ ई०।
१९. द्रष्टव्य—मेरठविश्वविद्यालयीयसंस्कृतशोधपत्रिका, दिसम्बर १९८२ ई०।

———

अध्यक्ष, संस्कृत-विभाग
**म० मा० डिग्री कालिज**
**खेकड़ा, मेरठ।**

डा० उमाकान्त शुक्ल

# नलायन मे प्रयुक्त छन्द

डा० श्यामशंकर दीक्षित ने अपने शोध-प्रबन्ध 'तेरहवीं-चौदहवीं शताब्दी के जैन-संस्कृत महाकाव्य'[1] में माणिक्यदेवमुनि या माणिक्यदेवसूरि[2] कृत नलायन (नला) में प्रयुक्त छन्दों का परिगणन करते हुए लिखा है—'प्रायः प्रत्येक सर्ग में अनुष्टुप् का प्रयोग अधिक हुआ है। अन्य छन्दों में मालिनी, आर्या, शार्दूल-विक्रीडित, वसन्ततिलका, मन्दाक्रान्ता, शिखरिणी, पृथ्वी, द्रुतविलम्बित, उपजाति, इन्द्रवज्रा, उपेन्द्रवज्रा, हरिणी, रथोद्धता, स्वागता, पुष्पिताग्रा, मजुभाषिणी, स्रग्धरा, भृंग, तोटक, भुजंगप्रयात, वंशस्थ, स्रग्विणी, हरिणप्लुता तथा कई प्रकार के अर्धसम वर्णिक वृत्तों का प्रयोग हुआ है। सवैया और षटपदी (छप्पय) का प्रयोग संस्कृत साहित्य में कम मिलता है, किन्तु "नलायनम्" में इनका प्रयोग भी हुआ है।[3] "जैन साहित्य का बृहद् इतिहास" के छठे भाग[4] में डा० गुलाबचन्द्र चौधरी ने डा० श्यामशंकर दीक्षित के ग्रन्थ का सन्दर्भ दिए बिना ही उनके मत को ज्यों का त्यों रख दिया है।[5]

प्रस्तुत पत्र में लेखक का मुख्य लक्ष्य डा० दीक्षित के मत और डा० चौधरी के अनुमत की परीक्षा करना है।

छन्दोविधान से किसी कवि के काव्य-शिल्प की परख ही नहीं होती प्रत्युत इसके द्वारा उसकी कृति के परिमाण को भी नाप-तोल लिया जाता है। पद्य के जो दो भेद—जाति और वृत्त हैं उनमें वृत्त के तीन प्रकार प्रसिद्ध हैं—समवृत्त, अर्धसमवृत्त और विषमवृत्त। माणि० ने मात्र-गणना पर आधृत जिन-जिन जातियों और अक्षर-गणना पर आधृत जिन-जिन वृत्तों का नला० में प्रयोग किया है उनका विवरण अधोदत्त है—

## (क) जाति

**आर्या तथा औपचछन्दसिक—**

दो श्लोकों[6] में आर्या तथा नौ श्लोकों[7] में औपच्छन्दसिक छन्द का प्रयोग हुआ है।

## (ख) समवृत्त

**इन्द्रवज्रा, उपेन्द्रवज्रा, दोनों की उपजाति, भ्रमरविलसित, रथोद्धता, स्वागता, दोनों की उपजाति तथा शालिनी—**

छन्दःशास्त्र में प्रत्येक पाद में ग्यारह-ग्यारह अक्षरों वाले छन्दों की पारिभाषिक संज्ञा 'त्रिष्टुप्' कही गई है। त्रिष्टुप् समुदाय वाले छन्दों में छह श्लोकों[8] में इन्द्रवज्रा, छह श्लोकों[9] में उपेन्द्रवज्रा उनचास श्लोकों में इन्द्रवज्रा और उपेन्द्रवज्रा की उपजाति, जिनमें छह श्लोक[10] ऐसे हैं जिनके प्रथम पाद में, चार श्लोक[11] ऐसे हैं जिनके द्वितीय पाद में, छह श्लोक[11]क ऐसे हैं जिनके प्रथम और द्वितीय पाद में, दो श्लोक[12] ऐसे हैं जिनके तृतीय पाद में, तीन श्लोक[13] ऐसे हैं जिनके प्रथम और तृतीय पाद मे, पाँच श्लोक[14] ऐसे हैं जिनके द्वितीय और तृतीय पाद में, चार श्लोक[15] ऐसे हैं जिनके प्रथम तीन पादों में, छह श्लोक[16] ऐसे हैं जिनके चतुर्थ पाद में, चार श्लोक[17] ऐसे हैं जिनके प्रथम और अन्तिम पाद में, एक श्लोक[18] ऐसा है जिसके द्वितीय और चतुर्थ पाद में, चार श्लोक[19] ऐसे है जिनके प्रथम, द्वितीय और चतुर्थ पाद में, एक श्लोक[20] ऐसा है जिसके तृतीय और चतुर्थ पादों में, दो श्लोक[21] ऐसे हैं जिनके प्रथम, तृतीय और चतुर्थ पादों में,

तथा एक श्लोक[३२] ऐसा है जिसके द्वितीय, तृतीय और चतुर्थ पादों में उपेन्द्रवज्रा तथा अतिरिक्त पादों में इन्द्रवज्रा है[३३] एक श्लोक[३४] में भ्रमरविलसित, इक्कीस श्लोकों[३५] में रथोद्धता, अड़तीस श्लोकों[३६] में स्वागता; एक श्लोक[३७] में रथोद्धता और स्वागता की उपजाति और चौदह श्लोकों[३८] में शालिनी छन्द का निबन्धन हुआ है।

**वंशस्थ, तोटक, द्रुतविलम्बित, भुजंगप्रयात, प्रमिताक्षरा और प्रभा—**

जिनके प्रत्येक पाद में बारह-बारह अक्षर होते हैं वे छन्द 'जगती' कहलाते है। जगती समुदाय वाले छन्दों में से चार श्लोकों[२९] में वंशस्थ, दो श्लोकों[३०] में तोटक, छत्तीस श्लोकों[३१] में द्रुतविलम्बित, पाँच श्लोकों[३२] में भुजंगप्रयात, एक श्लोक[३३] में प्रमिताक्षरा तथा एक श्लोक[३४] में प्रभा छन्द का प्रयोग हुआ है।

**प्रहर्षिणी, रुचिरा तथा मंजुभाषिणी—**

प्रत्येक पाद में तेरह-तेरह अक्षरों वाले छन्द "अति जगती" कहलाते हैं। इस वर्ग में ग्यारह श्लोकों[३५] में प्रहर्षिणी, तीन श्लोकों[३६] में रुचिरा एवं आठ श्लोकों[३७] में मंजुभाषिणी छन्द का प्रयोग हुआ है।

**वसन्ततिलका और प्रहरणकलिका—**

प्रतिपाद चौदह-चौदह अक्षरों वाले छन्दों को 'शक्वरी' कहा जाता है। शक्वरी वर्ग के छन्दों में दो सौ पच्चीस श्लोकों[३८] में वसन्ततिलका[३९], जो इयत्ता की दृष्टि से नला० में अनुष्टुप् के अनन्तर आता है, छन्द का तथा एक श्लोक[४०] में प्रहरणकलिका[४१] छन्द का प्रयोग हुआ है।

**मालिनी तथा शशिकला—**

प्रत्येक पाद में पन्द्रह-पन्द्रह अक्षरों वाले छन्दों को 'अतिशक्वरी' कहा जाता है। इस वर्ग के छन्दों में एक सौ इक्तालीस श्लोकों[४२] में मालिनी एवं एक श्लोक[४३] में शशिकला[४४] छन्द का प्रयोग हुआ है।

**शिखरिणी, पृथ्वी, हरिणी, मन्दाक्रान्ता तथा नर्कुटक—**

प्रतिपाद सत्रह-सत्रह अक्षरों वाले छन्द 'अत्यष्टि' कहलाते हैं। इस वर्ग के छन्दों में नौ श्लोकों[४५] में शिखरिणी का, नौ श्लोकों[४६] में पृथ्वी का, दस श्लोकों[४७] में हरिणी का, बानवें श्लोकों[४८] में मन्दाक्रान्ता का एवं एक श्लोक[४८]क में नर्कुटक[४९] छन्द का प्रयोग हुआ है।

**शार्दूलविक्रीडित—**

प्रतिपाद उन्नीस-उन्नीस अक्षरों वाले छन्दों को 'अतिधृति' कहा जाता है। इस वर्ग के छन्दों में से केवल शार्दूलविक्रीडित का पचपन श्लोकों[५०] में प्रयोग हुआ है।

**स्रग्धरा—**

इक्कीस-इक्कीस अक्षरों में सम्पन्न प्रत्येक पाद वाले समवृत्त "प्रकृति" कहे जाते हैं। इस वर्ग के छन्दों में से पाँच श्लोकों[५१] में स्रग्धरा छन्द का प्रयोग हुआ है।

## (ग) अर्धसमवृत्त

**वियोगिनी एवं पुष्पिताग्रा—**

नला० में केवल दो अर्धसमवृत्त आए हैं, जिनमें एक श्लोक[५२] में वियोगिनी[५३] तथा उनतीस श्लोको[५४] में पुष्पिताग्रा छन्द का प्रयोग हुआ है।

## अतिरिक्त छन्द

छह पादों में निष्पन्न छन्द को षट्पद या षट्पदी कहा जाता है। नला० में षष्टपदी शीर्षक देकर छह पदों का केवल एक छन्द[५५] लिखा गया है।

एक छन्द ऐसा है जिसके प्रत्येक पाद में बीस-बीस अक्षर हैं। ये बीसों अक्षर लघु हैं और इनमें एक ही स्वर का प्रयोग हुआ है। माणि० ने "सर्वलघुरेकस्वरः", शीर्षक के अन्तर्गत उक्त प्रकार का केवल एक छन्द[५६] दिया है।

एक छन्द [५७] ऐसा भी है जो स्वयं में अपूर्ण लगता है। इसके प्रथम इकतीस अक्षरों से इसमें कवित्त नामक छन्द का भान होता है। इसमें कुल चालिस वर्ण हैं। वस्तुतः यह इतना अव्यवस्थित है कि इसका छन्दोभेद निर्धारित नहीं किया जा सकता।

## अनुष्टुप्

नला० में प्रधान छन्द अनुष्टुप् है। इस छन्द में निबद्ध श्लोकों की कुल संख्या तीन हजार दो सौ पचास है।[५८]

संक्षेप में नला० में प्रयुक्त छन्दों की सूची इस प्रकार बनती है—

**(क) जाति—**

| | |
|---|---|
| आर्या | २ |
| औपच्छन्दसिक | ६ |

**(ख) समवृत्त—**

| | |
|---|---|
| **अनुष्टुप्** | **३२५०** |
| **त्रिष्टुप् वर्ग** (प्रतिपाद ११ अक्षर वाले छन्द) | |
| इन्द्रवज्रा | ६ |
| उपेन्द्रवज्रा | ६ |
| उपजाति (उक्त दोनों की) | ४६ |
| भ्रमरविलसित | १ |
| रथोद्धता | २१ |
| स्वागता | ३८ |
| उपजाति (उक्त दोनों की) | १ |
| शालिनी | १४ |
| **जगती वर्ग** (प्रतिपाद १२ अक्षर वाले छन्द) | |
| वंशस्थ | ४ |
| तोटक | २ |
| द्रुतविलम्बित | ३६ |
| भुजंगप्रयात | ५ |
| प्रमिताक्षरा | १ |
| प्रभा | १ |

| | |
|---|---|
| **अतिजगती वर्ग** (प्रतिपाद १३ अक्षर वाले छन्द) | |
| प्रहर्षिणी | ११ |
| रुचिरा | ३ |
| मंजुभाषिणी | ८ |
| **शक्वरी वर्ग** (प्रतिपाद १४ अक्षर वाले छन्द) | |
| वसन्ततिलका | २२५ |
| प्रहरणकलिका | १ |
| **अतिशक्वरी वर्ग** (प्रतिपाद १५ अक्षर वाले छन्द) | |
| मालिनी | १४१ |
| शशिकला | १ |
| **अत्यष्टि वर्ग** (प्रतिपाद १७ अक्षर वाले छन्द) | |
| शिखरिणी | ६ |
| पृथ्वी | ६ |
| हरिणी | १० |
| मन्दाक्रान्ता | ६२ |
| नर्कुटक | १ |
| **अतिधृति वर्ग** (प्रतिपाद १९ अक्षर वाले छन्द) | |
| शार्दूलविक्रीडित | ५५ |
| **प्रकृति वर्ग** (प्रतिपाद २१ अक्षर वाले छन्द) | |
| स्रग्धरा | ५ |
| **(ग) अर्धसमवृत्त—** | |
| **वियोगिनी** | १ |
| पुष्पिताग्रा | २६ |
| **अतिरिक्त छन्द—** | |
| षट्पदी | १ |
| अपूर्ण | १ |
| अज्ञातनाम | १ |
| योग[५९] | ४०५० |

यह देखा जा सकता है कि डा० दीक्षित ने अपनी सूची में तथा डा० गुलाबचन्द्र चौधरी ने अपनी अनुमत सूची में औपच्छन्दसिक, भ्रमरविलसित, शालिनी, प्रमिताक्षरा, प्रभा, प्रहर्षिणी, रुचिरा, प्रहरण-कलिका, शशिकला, नर्कुटक और वियोगिनी—-इन ग्यारह छन्दों को छोड़ दिया है। इसके अतिरिक्त उन्होंने चार एसे छन्दों को भी सूचीबद्ध किया है जो नला० में हैं ही नहीं—भृंग, स्रग्विणी, हरिणप्लुता और सवैया।

**सन्दर्भ संकेत—**

प्रस्तुत पत्र में सर्वत्र श्रीयशोविजय जैन ग्रन्थमाला (सं० १४१) भावनगर से प्रकाशित (१९३७ ई०) नलायन का उपयोग किया गया है।

१. प्रकाशक—मलिक एण्ड कम्पनी, चौड़ा रास्ता, जयपुर–३, प्रथम संस्करण १९६९।

२. नलायन के प्रथम तथा चतुर्थ स्कन्ध की समाप्ति पर लिखित श्लोकों से पता चलता है कि इस काव्य के लेखक माणिक्यदेवमुनि हैं। किन्तु प्रत्येक सर्ग की समाप्ति पर लिखी पुष्पिकाओं में माणिक्यदेवमुनि के स्थान पर "माणिक्यदेवसूरि" शब्द का प्रयोग प्राप्त है। समालोचना और इतिहास-ग्रन्थों में भी माणिक्यदेवसूरि का अधिक प्रयोग हुआ है।

३, पृष्ठ ३७४।

४. प्रकाशक-पार्श्वनाथ विद्याश्रम शोधसंस्थान, वाराणसी–५ प्रकाशन वर्ष १९७३।

५. इस काव्य के प्रत्येक सर्ग में अनुष्टुप् का प्रयोग अधिक हुआ है। अन्य छन्दों में मालिनी, आर्या, शार्दूल-विक्रीडित, वसन्ततिलका, मन्दाक्रान्ता, शिखरिणी, पृथ्वी, द्रुतविलम्बित, उपजाति, इन्द्रवज्रा,, उपेन्द्रवज्रा, हरिणी, रथोद्धता, स्वागता, पुष्पिताग्रा, मंजुभाषिणी, स्रग्धरा, भृंग, तोटक, भुजंगप्रयात, वंशस्थ, स्रग्विणी, हरिणप्लुता तथा कई प्रकार के अर्धसम वर्णिक, वृत्तों का प्रयोग हुआ है। सवैया और षट्पदी जैसे संस्कृतेतर छन्दों का प्रयोग इस काव्य में हुआ है (पृष्ठ १३७)।

६. ३.१.५ तथा ७ (किन्तु इसके उत्तरार्ध में यति भंग दोष है।)

७. १.३ ३५, १.४.५४, ५५, १.१५.२२, ३.७.७, ४.६.४६, ४.१३.३०, ३१ तथा ५.१४.४६।

८. १.१३.५३, १.१४.४६, ४.८.४६, ४.१२.६३, ८.२.६१ तथा ९.३.२१।

९. १.७.११, १.१३.५१, ४.२.७४, ४.४.३३, ४.१२.६४ तथा ९.२.३०।

१०. १.७.१०, २.५-५८, ४.१२.५९, ६५, ५.१०.४३ तथा १०.१,२८।

११. २.५.५६, ४.१२.६०, १०.१.२६ तथा १०.२.१०।

११. (क) १.७.१६, १.१०.२५, १.१३.५२, ३.४.१८, ४.२.७० तथा ४.१२.७०।

१२. ४.१.२९ तथा ५.१०.४५।

१३. ५.१९.११, ६.४.१९ तथा १०.१.३०।

१४. २.७.१४, ४.१२.५४, ५.१९.९, १० तथा १०.१.२९।

१५. १.६.३४, ४.५.९१, १०.१.३१ तथा १०.२.११।

१६. १.६.३९, १.१५.२३, ४.१२.५५, ६२, ५.५.४२ तथा ५.१९.१२।

१७. २.१६.२०, ५.१०.४४, ५२ तथा ५.२१.८०।

१८. १.१०.२६।

१९. ४.१२.५३, ६१, ७३ तथा १०.४.१५।

२०. ४.१२.७२।

२१. ४.१२.५२ तथा ५.२१.७७।

२२. ८.४.३७।

२३. उपजाति के इन प्रकारों को क्रमशः—कीर्ति, वाणी, माला, शाला, हंसी, माया, जाया, बाला, आर्द्रा, भद्रा, प्रेमा, रामा, ऋद्धि और बुद्धि कहा जाता है।

२४. ३.१.१७।

२५. १.७.१२, ३०, ३३, १.८.३३, १.१०.२८, १.१३.५०, १.१४.३५, १.१५.१६, २१, २.६.१६, ३.६.१४, ३.७.१३, १५, १६, १७, ४.४.३६, ४.११.३६, ५.४.३८, ८.३.२७, १०.१.२७ तथा ३२।

२६. १.१.५४ (इसके प्रथम पाद "आदितः कथनमेव मज्जातम्" में छन्दोदोष है), १.७.१४, १.११.२७, २.१.५४, २.६.२६, २७, ३.६.१६, ३.७.१६. २०, २१, २२, २३, २४, २५, २६, (इस श्लोक में अन्तिम पाद "लोकपालकपट्टस्तु कपाटः" में "पट्टक" पद में पकार का गुरु होना दोषावह है। "पट्ट०" के स्थान पर "पट" शब्द का प्रयोग करने पर दोष नहीं रहता।) २७, ("अन्तिम पाद में छन्दोभंग",) २८, २६, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ४.२.७१, ७२, ४.११ ३३, ३४, ४.१२.५६, ५.१.२४, ६.४.१८, २०, २१, २२, २३, ६.६.४१ तथा ७.२.४२।

२७. ८.१.२६।

२८. ३.७.१८, ५.५.३६, ४०, ५.११.२२, २३, २४, २५, २६, (इस श्लोक का प्रथम पाद "नन्वेष मां मेषवत् कम्पमानम्" छन्दोदोष से ग्रस्त है। शालिनी का गणक्रम यह है—भगण, तगण, तगण, गुरु, गुरु। यहाँ प्रथम भगण नहीं बन पा रहा है। वास्तव में कथानक के अनुरोध से "माम्" के स्थान पर "त्वाम्" शब्द का प्रयोग होना चाहिये। "त्वाम्" करने पर न छन्दोदोष रहता है और न कथानक में कोई व्याघात आता है।) २७, २८, ३२, ५.१४.५१, ८.१.२७ तथा २८।

२९. ३.६.६, १५, ४.१२.५७ तथा ५.२१.७६।

३०. ३.७.१२ तथा ४.४.३२।

३१. १.४.५७, १.७.१३, २४, १.१४.४३, ४४, ४५, ४६, ४७, १.१५.२०, २.१६.२४, ३.३.२०, २५, ३.६.२०, ३.८.३८, ३६, ४०, ४१, ४.४.२५, २६, २७, २८, २६, ३० ३१, ३८, ४.१३.३४, ३५, ५.११.११, १४, १६, २०, २६, ५.२१.८१, ८.४.४१, ६.४.३५ तथा १०.४.१७।

३२. ३.१.६, ८, ६, ११ तथा १०.४.२०।

३३. १०.४.१८।

३४. ५.२.२८ (इसके प्रथम पाद "अधिजलधि वहति कूलंकषा" में प्रभा का लक्षण समन्वित नहीं होता। प्रभा में गणों का क्रम यह होता है—नगण, नगण, रगण, रगण। "वहति कूलंकषा" के स्थान पर "वहन्ति कूलंकषाः" पाठ कर देने पर छन्दोदोष का परिमार्जन हो जाता है।)

३५. २.१६ २३, ३.३.२४, ३.७.६, १०, ११, ५.६.४६, ५.१०.४६, ४७, ४८, ४६ तथा ६.६.४०।

३६. ५.२.२६, ५.१२.४७ तथा ५.१८.५६।

३७. १.७.२५, २६, २.१२.३६, २.१३.३६, ५.११.१७, ३०, ६.४.१४ तथा ८.२.५६।

३८. १.१.५१, १.२.७२, १.३.३७, ३८, ४८, १.५.२०, २१, १.६.३६, ३७, ३८, १.७.१७, १८, १६, २०, २३, २७, ३२, १.८ ३४, १.११.२४, २८, २६, १.१२.४३, ४४, १.१३.५५, १.१४.३६, ४०, ४१, ४२, ५०, ५१, ५२, ५३, ५४, १.१५.२४, २.१.२५, २.२.४२, ४३, ४७, २.३.७, ८, ११, २.४.२३, २४, २.५.५५, २.६.१४, १५, १६, २०, २१, २२, २३, २४, २.७.५, ६, १५, १६, १७, २.८.२२, २३, २४, २५, २८, २.१०.२०, २१, २२, २.११.२१, २.१२.४०, २.१३.३१, २.१४.३४, ३५, २,१५.१५, १६, १७, १८, १६, २०, २१, २२, २६. २.१६.१७, १८, १६, २१, २२, २५, ३.१.१८, १६, २०, २१, २२, ३.२,४३, ३.३.२१, २२, २३, ३.४.१६, २०, २१, २२, २३, २४, ३.५.२५, ३.६.१०, १८, ३.७.६, ३७, ३.८.४२, ४३, ४५, ४६, ३.६.२८, २६, ३०, ३४, ३५, ३७, ३८, ३६, ४०, ४.२.७४, ४.३.२६, ४.४.३४, ३५, ३७,

